**सामान्यं जातिरूपमुपाधिरूपं च । जातिः सत्ताद्रव्यगुणकर्मत्वादि[1] । उपाधिरूपं[2] पाचकत्वादि[3] ॥ ५२ ॥**

**प्रागभावादयः प्रतियोगिभेदादनन्ता एव ॥ ५३ ॥**

**मध्यत्वं[4] परत्वापरत्वाभावः ॥ ५४ ॥**

**अन्धकारोऽप्यभावः[5] ॥ ५५ ॥**

---

**सामान्यं जातिरूपमिति** । सामान्यमित्यनन्तरं त्रिविधमपीति विशेषो विभक्तविभागप्रकरणात् । ननु दण्डित्वाद्युपाधिः कथं सामान्यं नित्यानेकसमवेतत्वाभावात् । तथा हि कृत्तद्धितसमासेभ्यः संवन्धाभिधानं भावप्रत्ययेनेति वचनाद्दण्डसंवन्धः संयोगो दण्डित्वं । न चासौ नित्यः । एवं रूपवत्त्वं तत्समवायो नानेकसमवेतः । संयोगसमवायपृथग्भूतमपि वा तद्यदि नित्यं तदा दण्डादिसंवन्धाभावेऽपि प्रतीयेत । अथ अनित्यं न सामान्यं तल्लक्षणक्षयात् । अथ नित्यस्यापि तस्य व्यञ्जकसंवन्धाभावादप्रतीतौ को दोषः । नित्यानेकसमवेतत्वसाम्येऽपि[6] वाधकसद्भावासद्भावाभ्यामेव विशेष उपपत्स्यते । वक्ष्यति चावाधकं सामान्यं जातिः सवाधकमुपाधिरिति चेत् । सत्यम् । किंतु कादाचित्कदण्डपाकपाठादिसंवन्धव्यङ्ग्येषु नित्यवृत्तिषु दण्डिपाचकपाठकत्वादिषु परस्परपरिहारेणावर्तमानेषु संकरादि वाधकमेव दुर्निरूपमिति कथमुपाधिः सामान्यमिति चेत् । सोऽयं सामान्यलक्षणस्याव्याप्त्युद्भावनपर्यवसितश्रमो भवत इति सामान्यलक्षणनिरूपणावसर एव तमपाकरिष्याम इत्यलमनेन । तत्र परजातेरुदाहरणमाह । **जातिः सत्तेति** । परापरजातेरुदाहरणमाह । **द्रव्यत्वेत्यादिना** । आदिपदेन देवदत्तत्वाद्यपरजात्युदाहरणोपसंग्रहः । परापरोपाधेरुदाहरणमाह । **उपाधिरूपं पाचकत्वमिति** । परोपाधिः प्रमेयत्वादिः । अपरोपाधिरेतत्कालीनैतद्व्यक्तिविशेषत्वादिः स्वयं द्रष्टव्यः ॥

विभागन्यूनतां परिहरति **मध्यत्वमित्यादिना**[7] ॥ ननु नीलं तमश्चलतीत्यनुभवसिद्धाभ्यां क्रियारूपाभ्यां न तावदद्रव्यं तमः । द्रव्यमपि वा नाकाशादिचतुष्टयमिति स्पष्टमेव । रूपादेव न मनो न वायुः । नीलादेव न जलतेजसी । निर्गन्धत्वनिस्पर्शत्वाभ्यां न पृथिवीति परिशेषाद्द्रव्यान्तरमेव तमस्तत्कथं नवैव द्रव्याणीत्याशङ्क्याह । **अन्धकारोऽपीति** । तमःप्रदेशेषूभयवादिसंप्रतिपन्नेनालो-

---

१ द्रव्यत्वगुणत्व A. B. $P_1$. $P_2$. D. F. E. G. H. K. N.; धर्मत्वादि for कर्मत्वादि E. २ सामान्यं after उपाधिरूपं B. ३ पाचकत्वं A. C. $P_1$. $P_2$. F. K.; पाचकत्वपाठकत्वभावकत्वादि H. ४ मध्यत्वं etc. and अन्धकार etc. om. D.; मध्यमत्वं Jin ५ °प्यभाव एव A. G.; °प्यालोकाभावः C. ६ नित्यानेकसमवेतत्वसामान्येऽपि $P_1$. ७ मध्यत्वलघुत्वादिना $P_1$.

**शक्तिर्[1]द्रव्यादिस्वरूपमेव ॥ ५६ ॥**

**वैशिष्ट्यं[2] तु विशेषणविशेष्यै[3]तत्संबन्ध एव ॥ ५७ ॥**

---

काभावेनैव तद्यवहारोपपत्तेर्वैपरीत्यस्य चोष्णस्पर्शाद्यन्यथानुपपत्तेरशक्यशङ्कत्वाद्रूपादिप्रतीतेर्भ्रमत्वेनाप्युपपत्तेर्न द्रव्यान्तरकल्पनेति भावः ॥

ननु मण्यादिसमवधानासमवधानयोर्वह्नौ दृष्टादृष्टान्यतरवैगुण्यानुपपत्तेः सतोऽप्यदृष्टवैगुण्यस्य दृष्टसकलकारणाप्रतिद्वन्द्वितया प्रतिनियतपुरुषीयदाहादाहव्यवस्थानुपपत्तेः किंचिदतीन्द्रियमग्नेरनुग्राहकमुन्नीयते । तच्च द्रव्यादिकारणमात्रवृत्तित्वात् न द्रव्यादिमात्रमिति पदार्थान्तरमेव सैव शक्तिरिति कथं सप्तैव पदार्था इत्यत आह । **शक्तिः स्वरूपमेवेति** । स्वमसाधारणं प्रतिबन्धकदशाव्यावृत्तं रूपं धर्मः । स च प्रतिबन्धकाभावः कारणतावच्छेदकं दण्डत्वादिकं वासाधारणरूपमिति ध्येयम् । न पुनर्वह्निरेव शक्तिः शक्तो वह्निरिति हि प्रयोगप्रत्ययौ न शक्तिर्वह्निरिति । अयमाशयः । प्रतिबन्धकनाशितशक्तेः शक्त्यन्तरोत्पादे प्रतिबन्धकाभावसहकारिताया आवश्यकत्वाद्दोषाणां तु उभयसमाधेयतया तेनैवोपपत्तौ न पदार्थान्तरकल्पनेति ॥

ननु दण्डीति व्यवहारो न दण्डदेवदत्ततत्संबन्धावलम्बनः प्रत्येकमपि तदापत्तेर्मिलितालम्बनत्वेऽपि मेलकस्यानतिरेके स एव प्रसङ्गः । अतिरेके नाममात्रे विवादपरिशेषापत्तेः । दण्डदेवदत्ततत्संबन्धा इत्यतोऽविशेषप्रसङ्गाच्च । अतः पदार्थान्तरमेव विशिष्टमिति सप्तैवेत्यनुपपन्नमित्याशङ्क्याह । **विशिष्टं त्विति** । यथायथं गुणप्रधानभावापन्ना इति शेषः । इदमिहाभिसंहितम् । दण्डीति दण्डदेवदत्ततत्संबन्धा इति चानयोर्नास्त्येव विषयभेदः[5] । तमादायापि जायमानसमूहालम्बनादविशेषप्रसङ्गे तदुत्तरोत्तरविषयभेदाभ्युपगमेऽनवस्थापातात्किंतु गुणप्रधानभावापत्तिकृत एव विशेषः । दण्डीत्यत्र हि दण्डो गुणभावेनावभासते प्रकारत्वाद्देवदत्तः प्राधान्येन संबन्धस्तु न गुणो नापि प्रधानमतः स्वरूपेणैव भासते । समूहालम्बने दण्डादयः सर्वे प्राधान्येन दण्डत्वादीनामेव तत्र प्रकारत्वेनाप्राधान्यात् । अतो यो यन्निरूपितो यन्निष्ठः संबन्धः स एव तत्र तद्वैशिष्ट्यमिति न कश्चिद्दोष इति । इदं च पदार्थान्तरतावादिपक्षप्रतिक्षेपेऽभिनिविष्टस्य समानतन्त्रसिद्धान्तस्योपादानं नात्यन्तमसङ्गतमन्यैः सह विरोधे तु वयं पञ्चोत्तरं शतमित्यादिदर्शनात् । अत एव परस्परविरोधे तु वयं पञ्च शतानि ते इत्यादि निदर्शनीकृत्य तमप्युन्मूल-

---

१ तु after शक्तिः A. F. G. H; द्रव्यादि om. B. C. $P_1$. $P_2$. D. K. N. Jin. २ विशिष्टं तु B. C. $P_1$. $P_2$. D. F. K. N. ३ विशेषणविशेष्यसंबंधः A. G. Jin; विशेषणविशेष्यभावः संबंधः L. E. ४ वैशिष्ट्यं $P_4$. ५ After नास्त्येव विषयभेदः, $P_2$. has यं विषयमादाय समूहालंबनाद्भेदस्तमादायापि etc.

ज्ञातता ज्ञानविषय[1]संबन्ध एव ॥ ५८ ॥

सादृश्यमुपाधिरूपं सामान्यम् ॥ ५९ ॥

लघुत्वं गुरुत्वाभावः ॥ ६० ॥

एवमन्यस्यापि पदार्थस्य सतोऽत्रैवान्तर्भावः । यथा संख्याया एवं[2] गुणे ॥ ६१ ॥

एतेषु मध्ये[3] नित्यानां कारणत्वमेव । अनित्यानां कारणत्वं कार्यत्वं च । तत्र[4] समवायिकारणमसमवायिकारणं निमित्तकारणं चेति त्रिविधं कारणम् ॥ ६२ ॥

---

यत्त्वसाधारणं स्वसिद्धान्तं वक्ष्यति । वैशिष्ट्यमन्यव्यावृत्तिरिति । अतो न तत्त्वरूपस्य द्विर्वचनं दोष इति ॥

नन्वात्मधर्मेण ज्ञानेन घटादेरसंबन्धात्[5] ज्ञातो घट इति व्यवहारानुपपत्तिरतिप्रसङ्गो वा । इष्ट इत्यादिव्यवहारप्रतिबन्ध[6]स्य स्वविषयतानियामकज्ञानविषयतासद्भावेनानवस्था[7]नात् । अतो विषयतानियमाय ज्ञातता पदार्थान्तरमेष्टव्यमिति विभागन्यूनतामाशङ्क्याह । ज्ञाततेति । ज्ञाततया ज्ञानान्तराविषयत्वेऽसिद्धिप्रसङ्गात् । विषयत्वे च ज्ञातान्तरकल्पनेऽनवस्थानात्स्वभाव[8]संबन्धेनैव विषयतानियम इति भावः ॥

ननु सप्तस्वपि पदार्थेषु केन केनचिदाकारेण प्रतीयमानं सादृश्यं न सप्तान्तर्भूतमेवेति पदार्थान्तरमेव तदित्यत आह । सादृश्यमिति । तथा च सामान्यस्य समवायेन सर्वत्रावृत्तावपि परम्परासंबन्धेन सर्वत्र वृत्तिरविरुद्धेति भावः ॥

गुरुत्ववल्लघुत्वमपि गुणान्तरमेव विनिगमकाभावे विपरिवर्तप्रसङ्गेन भावाभावरूपविभागस्य दुर्वचत्वादित्यत आह । लघुत्वमिति । गुरुद्व्यारब्धस्य गुरुतरत्ववत् लघुद्व्यारब्धस्य लघुतरत्वप्रसङ्गादेव विनिगमकात् । अनन्यथासिद्धपतनहेतुतया गुरुत्वस्यैवासाधारणफलहेतुतया लघुत्वस्याकल्पनाच्च अभावरूपता लघुत्वस्येति भावः ॥ शङ्किष्यमाणन्यूनतापरिहारमाह ॥ एवमन्यस्यापीति । अन्यस्योक्तेभ्यो मध्यत्वादिभ्य इति शेषः । किं तत्रोदाहरणगवेषणया संख्यैव तदुदाहरणमित्याह । यथा संख्याया इति ॥ अन्ये तु यथा संख्याया गुण एवेति व्यस्तमन्वयमित्याहुः । तत्रैवकारवैयर्थ्यमिव भाति ॥

नित्यानां कारणत्वमेवेति । एवकारेण नित्यभावेषु कार्यत्वयोगो व्यव-

---

१ विषय om. A. B. G. N. H.K. २ इव for एव A. F. H. ३ मध्ये om. A. ४ तत्र कारणं A. B. D. K.; कारणं after त्रिविधं om. A. B. H. K. N. G.; तच्च कारणं G. N. ५ रसंभवात् $P_4$. ६ बन्धाश्च $P_1$. $P_3$. $P_4$. ७ नानुत्थानात् $P_1$. $P_3$. $P_4$. ८ भाव om. $P_4$.

**अपरे भेदाः स्वयमूहनीयाः ॥ ६३ ॥**

**एतेषां तत्त्वज्ञानं निःश्रे[1]यसहेतुः । तत्त्वमनारोपितं रूपम्[2] । तस्य ज्ञानमनुभवः । स च श्रवणमनननिदिध्यासनसाक्षात्कारलक्षणं[3]श्चतुर्विधः । निःश्रेयसं पुनस्तत्त्वज्ञानोत्पाद्यमिथ्याज्ञानकारणप्रध्वंससमानाधिकरणतत्कार्यसमस्तदुःखाभावः[4] ॥**

---

च्छिद्यते । न कारणत्वायोगः । अतो नाकाशपरिमाणादीनां अकारणत्वेऽप्यसामञ्जस्यम् । वस्तुतस्तु पारिमाण्डल्यादिभिन्नसंप्रतिपन्नकारणताकनित्यभावपरमेव नित्यपदमिति नैवकारोपदर्शितव्यापकताविरोध इति द्रष्टव्यम् ॥

चतुर्थीं शङ्कां निराकरोति । **एतेषामिति** । निःश्रेयसहेतुत्वं च तत्प्रागभावव्याप्यप्रागभावप्रतियोगित्वं कारणतत्कारणसाधारणम् । तत्रात्मतत्त्वज्ञानं संसारकारणीभूततन्मिथ्याज्ञाननिवर्तकतया कारणम् । तत्तत्त्वज्ञानसाधनतया चेतरपदार्थतत्त्वज्ञानमिति विवेकः । एवमेवं[5] च साक्षात्परम्परासाधारणप्रयोजकभावमभिप्रेत्यैतेषामिति वहुवचनं प्रायुक्तम्[6] । एतेनात्मतत्त्वज्ञानं संसारनृत्तशालामूलस्तम्भायमानस्याज्ञाननिवर्तकतया परमुद्दिश्यतां । कृतमितरपदार्थतत्त्वज्ञानोपदेशप्रयासेनेत्याद्यपदान्तर्गतसर्वपदे शङ्कान्तरमनवकाशं वेदितव्यम् ॥ **तत्त्वमनारोपितमिति** ॥ यद्यप्यनारोपितमिति प्रसज्यप्रतिषेधे भ्रमविषयत्वस्य केवलान्वयित्वेनाप्रसिद्धिः । पर्युदासे तु क्वचित्प्रमाविषयः सर्वत्र तत्त्वं स्यात् आरोपाविषयत्वस्यालाभात् । तथापि यत्र विशेष्ये यदनारोपितमस्तीति यावत्तत्र तत्तत्त्वम् । पर्युदासेन तदर्थसमर्पणं तु 'नञिवयुक्त'न्यायेन व्यतिरेकितया आरोपितसादृश्यलाभाय । तेन निःश्रेयसोपयोगिपरस्परव्यावृत्तपदार्थज्ञानजनकज्ञानविषयस्तत्त्वमिह लक्ष्यमिति केवलान्वयिन्यतिव्याप्तिरिति निरस्तम् । न चास्तीति लडर्थवर्तमानत्वविवक्षायां श्यामोऽयमासीदिति ज्ञानविषये श्यामत्वेऽव्याप्तिः । अविवक्षायां तु पाकरक्ते श्यामत्वं तत्त्वं स्यादिति वाच्यम् । संवन्धस्यैवास्त्यर्थत्वात् । घटस्वरूपे श्यामत्वस्य तत्त्वतयेष्टत्वात् । पाकजरागविशिष्टे च संवन्धस्यैवाभावादप्रसङ्गात् । **स च श्रवणेति** । श्रुतिपदपक्षै[7]कसंसर्गज्ञानानुमितिः श्रवणम् । तदितरेतरभेदानुमितिर्मननम् । मतेऽर्थे सजातीयज्ञानधाराकरणं निदिध्यासनम् । साक्षात्कारः प्रसिद्धः । एते चत्वारो यथासंभवं पदार्थानां न तु सर्वेषाम् । तत्रात्मनश्चत्वारोऽपि । **निःश्रेयसं पुनरिति** । इदानीं कतिपयदुःखध्वंसनिवृत्त्यै **समस्तेति** ।

---

१ निश्रेयस A. B. C. After निःश्रेयसहेतुः, K. has 'समवायिकारणं द्रव्यस्यैव असमवायिकारणं गुणकर्मणोरेव निमित्तकारणत्वं सर्वस्यैव ।' २ स्वरूपं D.; अनारोपितरूपं G. N. ३ लक्षण om. A.; चतुर्विधः & c. om. N. ४ मोक्षः after दुःखाभावः D. ५ एतदेव $P_2$. $P_4$. ६ प्रायुंक्त $P_1$. $P_4$. ७ पक्षिका $P_2$. $P_3$. $P_4$.

दुःखं तु शरीरं षडिन्द्रियाणि षड् विषयाः षड् बुद्धयः सुखं दुःखं चेत्येकविंशतिप्रकारम् ॥ ६४ ॥

इदानीं लक्षणाधीनत्वात्तत्त्वज्ञानस्य लक्षणमेवोच्यते । तत्र

---

श्रोत्रमनःप्रभृतेर्नित्यदुःखस्याविनाशादप्रसिद्धिं वारयति । कार्येति । स्वावच्छिन्नभोगजनकादृष्टक्षयेणौदासीन्येनावस्थानेऽपि दोषाभावात् मुक्तौ शरीरेन्द्रियादिकार्यसमस्तदुःखविनाशेऽपि प्रमाणाभावात्पुनरप्रसिद्धिं वारयति । तदिति । तेन देवदत्तमिथ्याज्ञानेन कार्यस्य समस्तदुःखस्याभावो देवदत्तनिःश्रेयसमित्यर्थः । तथापि देवदत्तमिथ्याज्ञानसाध्यतदीयसमस्तदुःखाभावो यज्ञदत्तेऽपि सोऽपि मुक्तः स्यात् । अत आह । मिथ्याज्ञानध्वंससमानाधिकरणेति । ननु सौषुप्तिकसकलदुःखाभावो भूतभाविमिथ्याज्ञानध्वंसैरसमानकालीनोऽपि तत्समानाधिकरण एवेत्यतिव्याप्तिरिति चेत् । न । अधिकरणपदेन कालरूपाधिकरणस्यैव ग्रहणात् । तथाप्यतीतमिथ्याज्ञानध्वंससमानकालीनत्वं तस्यापीति दोषतादवस्थ्यपरिहाराय समस्तमिथ्याज्ञानमेव तदर्थ इत्यभ्युपेयम् । न चैवं संभवति शुकमुक्तिकाले व्यधिकरणसमस्तमिथ्याज्ञानप्रध्वंसाभावात् । अत आह । कारणेति । मोक्षत्वाभिमताभावप्रतियोगिदुःखकारणं च मिथ्याज्ञानं समानाधिकरणमेवेति तल्लक्षणैया समानाधिकरणसमस्तमिथ्याज्ञानप्रध्वंससमानकालीनत्वलाभान्न पूर्वदोषः । न चैवमुत्तरसमस्तपदानर्थक्यं तादृशि चरमदुःखकालीने पूर्वदुःखाभावेऽतिव्याप्तेरन्यथा दुःपरिहरत्वात् । न च सुखान्तमुक्तौ भोगदशायामतिव्याप्तिस्तदापि मिथ्याज्ञानस्यात्यन्तमनुच्छेदात् । इति श्रुतपदार्थस्तावदुपवर्णितः । किमिह मिथ्याज्ञानध्वंसोऽपि भूतभाविवर्तमानप्रतियोगिविकल्पनेन कथं तत्त्वज्ञानोत्पाद्यः वासनानाशाभिधाने वा कथं न ग्रन्थविरोध इत्यादिना शोध्यस्वरूपविलयमात्रफलकेन कुसूलक्षालनायासेन । नन्वीदृशि निःश्रेयसे कथं तत्त्वज्ञानं हेतुस्तस्य मिथ्याज्ञाननिवर्तकतयैव लोकप्रसिद्धेरित्यत आह । तत्त्वज्ञानोत्पाद्येति । ध्वंसविशेषणं चैतत् । तथा च विशेषणीभूतमिथ्याज्ञानध्वंसजनकतया चरमदुःखध्वंसं संपादयतो युक्तं समस्तदुःखाभावात्मकनिःश्रेयसहेतुत्वं तस्य एकदेशोपगमापगमहेतूनामिव रौद्र्युपगमापगमहेतुत्वमिति भावः । ननु न तत्कार्यं दुःखमस्ति यद्व्यवच्छेदाय तत्कार्येत्युच्यत इत्याशङ्क्याह ॥ दुःखं त्विति । तथा चाकार्यदुःखव्यावृत्त्यर्थं तदुपादानमुचितमिति भावः ॥

वृत्तवर्तिष्यमाणयोः सङ्गतिं दर्शयन् लक्षणाभिधानस्य चावश्यकतां दर्शयन्नेव तत् प्रतिजानीते । इदानीं लक्षणाधीनत्वादिति । प्रागुद्देशप्रवृत्तेन प्रसङ्गा-

---

१ °भेदभिन्नं D. N. H. २ समस्त om. P3. P4. ३ तल्लक्षणक्षये P2. ४ दोष्यु° P4.

केवलव्यतिरेकी हेतुविशेषो लक्षणम् ॥ प्रयोगस्तु लक्षणमितरेभ्यो भिद्यते केवलव्यतिरेकिहेतुविशेषवचनत्वात्। यदितरेभ्यो न भिद्यते तत्केवलव्यतिरेकिहेतुविशेषवचनमपि न भवति यथा धूमवत्त्वम्। तथा चेदं केवलव्यतिरेकिहेतुविशेषवचनं न भवतीति न। तस्मादितरेभ्यो न भिद्यते इति न किंतु भिद्यत एव ॥ एवं सर्वत्र लक्षणे प्रयोगो द्रष्टव्यः ॥ ६५ ॥

तत्र पदार्थसामान्यलक्षणं[1] कृतमेव ॥ ६६ ॥

द्रव्यं तु द्रव्यत्वसामान्ययोगि गुणवत्समवायिकारणं चेति ॥ ६७ ॥

त्कस्यचिल्लक्षणमप्यभिहितं यथा विभक्तवायुभेदोदाहरणप्रदर्शनप्रवृत्तेन प्रागस्यात एवाग्रे तदनभिधानमिदानीं लक्षणमेवोच्यते इत्येवकारेण सूचयति। यद्वा बालव्युत्पादके प्रकरणे बहुयत्नसाध्यायाः परीक्षाया अनिरूपणं तदर्थः ॥ केवलव्यतिरेकीति। हेतुविशेषत्वमेव लक्षणत्वम्। इतरत्तु विवरणं विशेषस्य। तत्रापि न केवलपदमन्वयव्यतिरेकिणोऽपि क्वचिल्लक्षणत्वात्। क्वचिदन्वयस्य लक्षणताविरोधित्वे क्वचिदन्वये व्यतिरेकि गन्धवत्त्वमपि न लक्षणं स्यात्। एवं च धूमादेरपि[2] लक्षणत्वादग्निमे व्यावृत्त्यनुमाने वैधर्म्यदृष्टान्तसमर्पकं धूमपदं प्रमेयत्वाद्युपलक्षणमित्याहुः ॥

ननु पदार्थसामान्यलक्षणं किंचिदस्ति न वा। आद्ये तदन्वयि व्यतिरेकि वा। आद्ये न तल्लक्षणम्। लक्षणलक्षणाभावात्। व्यावृत्त्याद्यसाधकत्वाच्च। द्वितीये तु यन्निष्ठव्यतिरेकप्रतियोगि तत्तत्रैवाव्यापकं स्यात्। आद्यद्वितीये विशेषलक्षणाशक्यत्वं तस्य सर्वत्र सामान्यलक्षणपूर्वकत्वदर्शनादित्याशङ्क्याह। तत्र पदार्थलक्षणं कृतमेवेति। पदार्थानां द्रव्यादीनां सामान्यलक्षणासंभवेऽपि लक्षणमभियुक्तैस्तत्र तत्र कृतमेव। अतो न सामान्यलक्षणमनभिधाय विशेषलक्षणाशक्यत्वमिति विशेषलक्षणमेवास्माभिरभिधीयत इत्यर्थः ॥

तत्र द्रव्यं लक्षयति। द्रव्यं त्विति। गुणादिव्यावृत्त्यै द्रव्यत्वेति। सामान्यपदं जातिपरम्। तच्च सौगताशङ्कितमपोहवादं प्राभाकराशङ्कितं च संस्थानाव्यङ्ग्यत्वेनाजातित्वं निराकर्तुं। न लक्षान्तर्गतम् ॥ ननु द्रव्यत्व एवातिव्याप्तिस्तद्योगस्योभयसाधारण्यात् अथ द्रव्यत्वसामान्येन योगो विवक्षितः। न तु द्रव्यत्वसामान्यस्य योग इति। न च तस्यैव तस्य योग इव तेनैव योगः[3] संभवतीति चेत् तर्किं द्रव्य-

१ पदार्थलक्षणं N. G. H. K. $P_1$. $P_2$.; कृतमेव प्रमितिविषयाः पदार्था इति H.
२ अनुमानादेरपि $P_2$. ३ तेनैव तद्योगः $P_1$.

## गुणस्तु गुणत्वजातियोगी जातिमत्त्वे सत्यचलनात्मकत्वे सति समवायिकारणरहितश्चेति ॥ ६८ ॥

त्वसामान्येन यः संबन्धो द्रव्यस्य स तन्मात्रवृत्तिः । ओमिति वदन् स्ववचनविरोधं तावत्स्मारयितव्यः । ततः सिद्धान्तविरोधं पुत्रेण सह आगत इत्यादावागमनादेरुभयवृत्तितैव सहभावार्थः । तदिह तेन समं तस्य योग इति वदतैव तावदुभयवृत्तित्वमनुमतमिति कथं न विरोधः । नेयं सहार्थे योगे तृतीया । अपि तु निरूपणक्रियाकरणे । तन्निरूपितश्च योगो न तत्रैव तेनैव तद्युक्तमित्यप्रतीतेरिति चेत् न । द्रव्यत्वनिरूपितयोगवद्द्रव्यनिरूपितयोगो द्रव्यत्वेऽस्ति न वा । यद्यस्ति स प्राचीनद्रव्यत्वनिरूपितयोगादभिन्न इत्युभयनिरूप्यतयोभाभ्यामनादीयमानोऽनेकप्राघुणक इव निराश्रयः प्रसज्येत । अथ नास्ति द्रव्यत्वमेव तन्न स्यात् द्रव्येणासंबन्धात् । किं च तथा योगः स्वरूपसंबन्धो महाकाल इव तदुपाधावादित्यकर्मण्यपीत्यतिव्याप्तिरिति चेन्न । सामान्यापेक्षितो योगः समवायः सोऽस्यास्ति तत्सामान्ययोगि समवायीति यावत् । ततो द्रव्यत्वं सामान्ययोगि यत्रेति विग्रहेण समवायेन द्रव्यत्वं यत्रेत्यर्थलाभात् । न च द्रव्यत्वे तदस्ति । न वा कालोपाधौ समवायेन तदिति नातिव्याप्तिः । अत एव सामानाधिकरण्यं योगमादाय गुणेऽतिव्याप्तिरप्यनवकाशा । सामान्यपदसमभिव्याहारेण[2] योगपदस्य समवायार्थलाभात्[3] । इदमपि सामान्यपदप्रयोजनम् । एवमेवंजातीयके सर्वत्र । समर्पकपदाभावस्थले तु विवक्षैवास्य शरणमिति द्रष्टव्यम् । अन्ये तु मानं परिमाणं तेन सहभूतं समानं तद्भावः सामान्यम् । परिमाणवत्त्वं तद्योगित्वं तद्वृत्तिपदार्थविभाजकोपाधिमत्त्वं लक्षणान्तरमित्याहुः ॥ **गुणवदिति** ॥ गुणवदन्यान्यदित्यर्थः । तेन नोत्पत्स्यमानगुणे द्रव्येऽव्याप्तिः । अन्योन्याभावस्य व्याप्यवृत्तित्वात् । अनुत्पन्नगुणद्रव्यप्रध्वंसपक्षे तु गुणवद्वृत्तिपदार्थविभाजकोपाधिमदित्यर्थोऽतो[4] द्रव्यजनकचरमतन्तुसंयोगजनककर्मजन्यविभागोत्तरक्षणोत्पन्नेन प्रथमतन्तुकर्मणा द्रव्योत्पत्तिसमसमयमेव संयोगनाशान्नश्यति द्रव्ये गुणतत्प्रागभावप्रध्वंसासंभवेऽपि नाव्याप्तिः । न चैवमसंभवि प्रक्रियाक्रमेण कदाचित् तथापि संभवात् । एतेन गुणात्यन्ताभावविरोधिमद्द्रव्यमित्यादि प्रत्यादिष्टम् ॥ **समवायिकारणं** चेति ॥ स्वसमवेतकार्यजनकतावच्छेदकजातीयमित्यर्थः । अतो न प्राचीनदोषानुषङ्गः ॥

गुणलक्षणं पूर्वं पूर्ववत् । द्वितीये तु सामान्यादिनिवृत्त्यै पूर्वविशेषणम् । उत्तरे क्रमेण कर्मद्रव्ययोः । समवायिकारणराहित्यं च स्वरूपायोग्यत्वं विवक्षितमतो नोत्पद्यमाने द्रव्येऽतिव्याप्तिः ॥

---

१. कारणत्वरहित॰ A. C. D. N. H. २ समभिहारेण P3. ३ समवायिपरत्वलाभात् P3. समवायपरत्वाभावात् P4. ४ ॰दित्यर्थतो etc. P3.

**कर्म कर्मत्वजातियोगि आद्यसंयोगविभागयोरसमवायिकारणं चेति ॥ ६९ ॥**

**सामान्यं नित्यमेकमनेकसमवेतं च ॥ ७० ॥**

**विशेषस्तु सामान्यरहित एकव्यक्तिवृत्तिः ॥ ७१ ॥**

कर्मलक्षणमपि पूर्वं पूर्ववत्। द्वितीये तु क्रमेण संयोगविभागाजन्यत्वमुभयोराद्यत्वम्। तदुभयगर्भं च लक्षणद्वयमत्र विवक्षितमतो नेतरभेदसाधने वैयर्थ्यमन्यतरस्य। असमवायिकारणत्वं च स्वरूपयोग्यत्वं विवक्षितमिति न विनश्यदवस्थकर्मण्यव्याप्तिः। संयोगविभागव्यावृत्त्यै आद्येति॥

सामान्यमिति। नित्यत्वमात्रं गगने समवेतत्वविशेषितमपि विशेषेष्वतिव्याप्तमित्यनेकेत्यपि। अनेकसमवेतत्वं च सर्वविशेषान्योन्याभाववत्समवेतत्वमिति न रूपत्वादावव्याप्तिरिति वृद्धाः। एकपदं तु न लक्षणान्तर्गतं किंतु विशेषवत्प्रतिव्यक्ति नानेकं सामान्यं किंत्वेकमिति एकाकारप्रत्ययनिर्वाहक्षमत्वं तस्योपदर्शयितुम्॥ अन्ये तु द्रव्यकिरणावलीप्रकाशानुसारेण समवेतपदं वृत्तिमन्मात्रपरमङ्गीकृत्याभावसमवाययोरतिव्याप्तिनिरासायैकमित्याचक्षते। तत्र तदर्थतयाभिमतमसहायत्वं नोत्पत्तौ। नित्यभावेऽसंभवात्। ससहायोत्पत्तिकान्यत्वं वातिव्यापकमेव प्राग्वत्। नापि ज्ञप्तौ। इतरनिरूपणानधीननिरूपणकत्वपर्यवसाने इदंत्वादिना प्रतियोगिसंबन्धिनिरूपणानधीननिरूपणयोरभावसमवाययोरेवातिव्याप्तेः। तद्भियैवान्योन्याभावव्याप्यवृत्तिप्रत्याशया तदधीननिरूपणकान्यत्वपर्यवसाने तु स्फुट एव जातिपरित्यागः स्वविशेष्यकजातिप्रतीतेर्विशेषणीभूतव्यक्तिनिरूपणाधीनत्वेन जातेरपि तथात्वाभावादित्यादि दूषणजातं यद्यप्यभावसमवायसविकल्पकैकवेद्यतापक्षेऽविशिष्टप्रतीतिविषयत्वपर्यवसानेनानुपमृदितासहायपदस्वरसेन सुपरिहरम्। अनेकपदवैयर्थ्यमपि योगिनिर्विकल्पकपक्षे विशेषादिनिरासेन। तथाप्यन्यपरस्यापि समवेतपदस्यैवोपादाने लक्षणानन्तर्गतस्याप्येकपदस्येव न प्रयोजनान्तरं प्रतिभाति। भगवदिच्छात्मनि च संकेते स्वरूपसंबन्धेनानेकवृत्तौ विशेषादिवन्निर्विकल्पकविषयेऽतिव्याप्तिः॥ ननु जात्युपाधिसाधारणसामान्यलक्षणस्यास्य दण्डित्वाद्युपाधयोऽपि लक्ष्यास्ते च 'कृत्तद्धितसमासेभ्यः संबन्धाभिधान'मित्यादिन्यायेन दण्डसंयोगादिपर्यवसिताः कथं नित्यानेकसमवेता इति चेन्न। परम्परासंबद्धाया जातेरेवोपाधित्वात्तस्याश्च नित्यत्वात्। कुतस्तर्हि जात्युपाधिवैचित्र्यम्। संबन्धभेदादेवेति गृहाण॥

विशेषस्त्विति। रूपादिनिवृत्त्यै पूर्वभागस्तत्र सामान्यं जातिस्तद्राहित्यमपि

१ °विभागासमवायि° A. B. N; G. H. K. २ अनेकव्यक्तिसमवेतं G. K.; एकं om. N. ३ विशेषास्तु......रहिता......वृत्तयः A. ४ वैयर्थ्यमिव $P_1$. $P_3$. $P_4$.

**नित्यसंबन्धः समवायः ॥ ७२ ॥**
**प्रतियोगिज्ञानाधीनज्ञानोऽभावः ॥ ७३ ॥**
**पृथिवीत्वसामान्यवती गन्धवती च पृथिवी ॥ ७४ ॥**

---

साक्षात्संबन्धेन विवक्षितम् । अन्यथा विशेषत्वोपाधिप्रविष्टाया जातेः परम्परयापि तत्रावृत्तौ विशेषानुगतस्य व्यवहारस्यैवोच्छेदप्रसङ्गात् । विशेषणोपादानसामर्थ्यादवधारणगर्भः सामान्यनिवृत्त्यै चरमभागः । तत्र वृत्तिः समवाय इति[2] नाप्रसिद्धिर्नवा ज्ञानप्रागभावादावतिव्याप्तिः ॥

**नित्यः संबन्ध** इति । गगनादिव्यावृत्त्यै परभागः संयोगव्यावृत्त्यै पूर्वभागः ॥ ननु सुखादिसाक्षात्कारजनकमनःसंयुक्तसमवायसंबन्धशरीर[3]प्रविष्टे नित्ये चात्मन्यतिव्याप्तिः । तथातीतानागतसाक्षात्कारे चक्षुःसंबन्धभूते सामान्ये नित्यस्वरूपसंबन्धे वाच्यवाचकभावे चातिव्याप्तिः । मुख्यः संबन्धो विवक्षित इति चाविनिगमपराहतम्[4] । जातिशून्यत्वे सत्यसमवेतभावत्वं तु स्फुटमात्माश्रयग्रस्तम् । न जातिस्वरूपान्तर्गतानेकसमवेतत्वप्रयुक्तेनान्योन्याश्रयेणापि निहन्तुमुचितम् । अथ सविशेषणे हीति न्यायेन संबन्धत्वेन नित्यत्वान्वयात् यस्य संबन्धत्वं नित्यं संबन्धत्वमेव यस्य न कदाचित्स्वभिन्नसंबन्धसंबन्धित्वमपि संयोगादिवत् स समवाय इत्यक्षरार्थः । समवायान्ये च केचिदन्यत्र समवेततया केचिदन्यसमवायवत्तया केचिदुभयरूपतया स्वभिन्नसंबन्धसंबन्धिन एवेत्यदोषः । अभावस्वरूपसंबन्धव्यावृत्त्यर्थं भाव इत्यपि द्रष्टव्यमिति मतम् । तन्न । समवायस्यापि समवायपदसंकेतनात्मकस्वभिन्नसंबन्धसंबन्धित्वेनासंभवप्रसङ्गात् । तस्मात् सद्भिन्नस्वभिन्नसंबन्धाधेयभिन्नभावत्वं समवायत्वम् । प्रलये च जात्यादेः स्वरूपसंबन्धेन काले वृत्तावपि प्राक् समवायेनाधेयस्य न स्वभिन्नसंबन्धाधेयभिन्नत्वम् । अन्योन्याभावस्य व्याप्यवृत्तित्वात् । अवृत्तिव्यावृत्त्यै सद्भिन्नेति द्रष्टव्यम् ॥

**प्रतियोगिज्ञानाधीनज्ञान इति** । अत्र यद्यपि प्रतियोगी न निरूपकमात्रं संयोगसमवायादावतिव्याप्तेः । नापि विरोधी तस्याभावगर्भत्वेनान्योन्याश्रयात् । अत एव न स्वाभावविरहः । सर्वत्र ज्ञाने विषयीभूतादभावादन्यस्य कार्यतावच्छेदकस्यापरिचये प्रतियोगिज्ञानाधीनत्वस्य[5] ज्ञातुमशक्यत्वं[6] च । तथाप्यभावत्वमखण्डोपाधिरेव लक्षणतया विवक्षितमित्याहुः ॥

**पृथिवीत्वसामान्यवती पृथिवी**त्यादौ पृथिवीत्वादिना सामान्यवतीति विग्रहात् न कर्मधारयान्मतुबनुपपत्तिः । सामान्यादिपदं च सामान्यनिर्वाहकसंबन्धेन

---

१ नित्यः संबंधः $P_1$. $P_2$. D. E. F. G. H. K. २ समवायेनेति नाप्रसिद्धिः $P_2$. ३ शरीर om. $P_4$. ४ अविनिगमकपराहतं $P_2$. ५ °धीनज्ञानत्वस्य $P_4$. ६ अशक्यत्वाच $P_3$.

अप्त्वजातिमत्यः शीतस्पर्शवत्य[1] आपः ॥ ७५ ॥

तेजस्त्वजातियोग्युष्णस्पर्शवत्तेजः[2] ॥ ७६ ॥

वायुत्वजातियोग्यरूपस्[3]पर्शवान्[4]वायुः ॥ ७७ ॥

शब्दगुणमाकाशम् ॥ ७८ ॥

आदित्यपरिवर्तनो[5]त्पाद्यपरत्वापरत्वासमवायिकारणाधारः परत्वापरत्वानधिकरणं कालः ॥ ७९ ॥

आदित्यसंयोगाजुत्पाद्यपरत्वापरत्वासमवायिकारणाधारः परत्वापरत्वानधिकरणं दिक् ॥ ८० ॥

आत्मत्वसामान्यवान् बुद्धिगुण[6] आत्मा ॥ ८१ ॥

मनस्त्वजातियोगि स्पर्शशून्यं क्रियाधिकरणं मनः ॥ ८२ ॥

रूपत्वजाति[7]मच्चक्षुर्मात्रग्राह्यो गुणो रूपम् ॥ ८३ ॥

---

तद्वत्तालाभायेति न कालादावतिव्याप्तिः ॥ **शब्दगुणमिति** । बहुव्रीहिः प्रतीत[8]-मत्वर्थमात्रं समवायेन शब्दवदन्यान्यत्वं चेह लक्षणम् । तस्य विभुर्द्रव्यत्वे[9] गगनस्य तद्वत्तानुपपत्तिरजसंयोगाभावात् । अयुतसिद्ध्यभावादतिप्रसङ्गाच्चेति शङ्कानिरासाय तु गुणग्रहणम् ॥ **आदित्येत्यादि** । परत्वापरत्वगर्भं लक्षणद्वय-मिह विवक्षितम् । अतो नान्यतरवैयर्थ्यम् । तत्र परत्वानधिकरणमात्रं गुणादा-वतिप्रसक्तमित्यतः परत्वासमवायिकारणाधार इति । तत्कारणाधारतामात्रमद[10]-ष्टाधारतयात्मन्यतिव्याप्तमित्यसमवायीति । ज्ञानासमवायिकारणाधारतया पुनस्त-त्रैवातिव्याप्तिरिति परत्वेति । तादृशदिक्पिण्डसंयोगाश्रये दिश्यतिव्याप्तिं परिहर्तु-मादित्येत्यादि । पिण्ड एव तां परिहर्तुं परत्वानधिकरणमिति । एवमपरत्वगर्भ-लक्षणेऽपि विशेषणकृत्यं द्रष्टव्यम् । एवमेव च दिग्लक्षणद्वयेऽपि ॥ **बुद्धिगुण** इति तु शब्दगुणमितिवद्व्याख्येयम्[11] ॥ **स्पर्शशून्यमिति** । घटादिव्यावृत्त्यै पूर्व-भागः । गगनादिव्यावृत्त्यै चोत्तरभागः । स्पर्शवदवृत्तिकर्मवद्वृत्तिद्रव्यत्वव्याप्य-जातिमत्त्वमिति तु तात्पर्यम् ॥

**चक्षुर्मात्रेति** । विशेष्यमात्रं रसे चक्षुर्ग्राह्यत्वविशेषितं संयोगादौ विशेष-

---

१ शीतस्पर्शा A. B. C. F. D. H. G. K. N. २ उष्णस्पर्शं A. B. C. D. E. F. G. H. K. N. ३ अरूपः स्पर्शवान् C. ४ अपाकजानुष्णाशीतस्पर्शो after स्पर्शवान् H. ५ °संयोगोत्पाद्य° L.; परिवर्तनोत्पाद्य again K.; संयोगज N. ६ बुद्धिगुणवान् A. ७ रू-पत्वजातियोगी C. F. ८ प्रतीतं $P_4$. ९ विभुत्वे $P_2$. १० °मात्रमतेद° $P_4$. ११ After इतिवद् व्याख्येयं, $P_2$. $P_3$. $P_4$. have 'तत्र चांतःकरणपरिणामरूपतया संख्याद्यभिमतं द्रव्य-त्वमपाकर्तुं गुणग्रहणम् ।'

**रसत्वजातियोगी रसनग्राह्यो गुणो रसः ॥ ८४ ॥**
**गन्धत्वजातियोगी घ्राणग्राह्यो गुणो गन्धः ॥ ८५ ॥**
**स्पर्शत्वजातियोगी स्पर्शनमात्रग्राह्यो गुणः स्पर्शः ॥ ८६ ॥**
**संख्यात्वसामान्यवती गणनासाधारणकारणं संख्या ॥८७॥**
**परिमाणत्वजातियोगि मानव्यवहारासाधारणकारणं परिमाणम् ॥ ८८ ॥**

---

पदमुपादायापि तत्परिहारे स्नेहे गुणरहितं रूपत्वादावतिप्रसक्तमतः समस्तं लक्षणम् । ननु दैवाच्चक्षुर्मात्रगृहीतविनष्टे संयोगादावतिव्याप्तिः । प्रभातेजस्त्वपक्षे तत्संयोगे तु स्फुटैव । परमाणुरूपे चाव्याप्तिरिति चेत् । अत्राहुः । चक्षुर्मात्रग्राह्यजातिमत्त्वमिह लक्षणम् । रूपत्वादिजातिव्यावृत्तिश्च जातिमत्त्वपदेनैवेति गुणपदमप्यप्रयोजनमिति । तन्न । रूपत्वादिजातेरनुमानादिग्राह्यत्वेनासंभवात् । चक्षुरन्येन्द्रियाग्राह्यत्वस्यापि मनोग्राह्यत्वेनासंभवात् । बाह्यत्वेनेन्द्रियविशेषणे गुरुत्वादावतिव्याप्तेः । चक्षुःप्रमाणकलौकिकप्रत्यक्षमात्रविषयत्वं तु तदन्याविषयत्वपर्यवसाने[१] गुरुत्व एवातिव्याप्तम् । तस्माच्चक्षुरन्यबहिरिन्द्रियजलौकिकप्रत्यक्षाविषयचक्षुर्ग्राह्यजातिमान् गुणो रूपमिति लक्षणं विवक्षितम् । गुणपदं चानुगतप्रत्ययसिद्धप्रभात्वजातिमत्प्रभावारणाय । तद्रहितमेव वा लक्षणमिति दिक् ॥ **रसनग्राह्य** इति । अत्र रसत्वजातावतिव्याप्तिवारणाय रसनग्राह्यजातिमत्त्वं विवक्षितमपि सत्तामादायातिप्रसङ्गीति मात्रपदमपि द्रष्टव्यम् । तन्महिम्ना च रसनान्यबहिरिन्द्रियजलौकिकप्रत्यक्षाविषयरसनग्राह्यजातिमान् रस इति पर्यवस्यतीति न कश्चिद्दोषः । गुणपदं तु स्वरूपकथनाय । अतीन्द्रियरसेऽव्याप्तिवारणाय ग्राह्यपदेन ग्राह्यतावच्छेदकधर्मवत्त्वं[२] विवक्षित्वा रसत्वाद्यतिव्याप्तिनिरासाय गुणपदोपादानमिति तु असिद्धिमात्रवारकविशेषणवैयर्थ्यादयुक्तम् । अन्यार्थयापि विवक्षया दोषनिवृत्तिश्चेति । एवं गन्धस्पर्शशब्दलक्षणेष्वपि । संख्यात्वसामान्यसद्भावे कार्यलिङ्गकं प्रमाणं सूचयन्नेव संख्याया लक्षणान्तरमाह ॥ **गणनाव्यवहारे**ति । जन्यगणनासाक्षात्कारत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयो गुणः संख्या इत्यक्षरार्थः । गणनाभिवदनव्यवहारत्वावच्छिन्नकार्यतानिरूपितज्ञानवृत्तिकारणतावच्छेदकविषयो गुण इति । अयमाशयः । शतं गणना सहस्रं गणनेति शतादिषु परार्धपर्यन्तेषु जायमानोऽयमनुगतो गणना-

---

१ रसनाग्राह्यो G.; रसनेन्द्रियग्राह्यो N. २ स्पर्शनग्राह्यो H. K. ३ गणनाव्यवहारा° $P_1$. $P_2$. ४ परिमाणव्यवहारा° etc. F. ५ °पर्यवसानेऽसंभवि तदन्यबाह्येन्द्रियप्रमाणकलौकिकप्रत्यक्षाविषयत्वपर्यवसाने गुरुत्व etc. $P_3$. $P_4$. ६ °धर्मवत्त्वस्य विवक्षितत्वात् $P_2$; जातिमत्त्वं विवक्षित्वा $P_4$.

पृथक्त्वजातियोगि[1] पृथग्व्यवहारासाधारणकारणं पृथक्त्वम्[2] ॥ ८९ ॥

संयोगत्वसामान्यवाननित्यः[3] संबन्धः संयोगः ॥ ९० ॥

विभागत्वसामान्यवान्[4] विभक्तप्रत्ययासाधारणकारणं विभागः[5] ॥ ९१ ॥

परत्वत्वसामान्यवत्[6] परव्यवहारासाधारणकारणं परत्वम्[7] ॥ अपरत्वत्वसामान्ययोग्यपरव्यवहारासाधारणकारणमपरत्वम्[8][9] ॥ ९२ ॥

---

व्यवहारो न तावच्छतादिसंख्याव्यक्तिभिरननुगताभिः शक्य उपपादयितुम् । नापि शतत्वादिनानुगतीकृताभिः शतसंख्याव्यक्त्यनुगमेऽपि सहस्रादौ तदसंभवात् । अतो गणनात्वमेवानुगतं शतादीनामीदृशव्यवहारकारणतावच्छेदकं विषयतया कारणं च विषयस्थोद्भूतरूपत्वादिवत् तद्वती संख्येति । तत्र विषयतया कारणे संख्यात्वेऽतिव्याप्तिपरिहाराय गुणपदम् । संख्येति भावपरो निर्देश इति तु प्रकरणविरोधादयुक्तम् । एवमेवंजातीयकेषूत्तरलक्षणेष्वपि द्रष्टव्यम् ॥ **पृथक्त्वजातियोगीति** । यद्यपि पृथक्त्वं गुणो न जातिस्तथापि भावान्तरपरोऽयं निर्देशः । एवमन्यत्रापि द्रष्टव्यम् ॥ **अनित्यः संबन्ध** इति । समवायव्यावृत्त्यै पूर्वम् । घटादिव्यावृत्त्यै चोत्तरपदम् । ननु तन्तुपटप्रागभावस्वरूपसंबन्धेऽनित्येऽतिव्याप्तिः । संबन्धिभिन्नत्वविवक्षायामपि रूपादिप्रत्यासत्तिभूतचक्षुःसंयुक्तसमवायान्तर्गतानित्यघटादिस्वरूपेऽतिव्याप्तिरेव । अत एव तत्स्थाने गुणविशेषणमपि निरस्तम् । संयुक्तसमवेतसमवायान्तर्गतेऽनित्ये रूपादावतिव्याप्तिरिति । अत्र ब्रूमः । अनित्यः संबन्ध इति समभिव्याहारबलादनित्ये यस्मिन्संबन्धत्वं पर्याप्तं स संयोग इत्यर्थलाभाददोषः । संयुक्तसमवायादिस्थले हि नानित्यघटादिमात्रांशे संबन्धत्वपर्याप्तिर्यत्र च विशिष्टे पर्याप्तिर्न तदनित्यमिति नातिव्याप्तिः । अनित्योभयस्वरूपसंबन्धव्यवच्छेदाय संबन्धिभिन्नत्वे सतीत्यपि[10] विशेषणीयम् । मम शरीरमित्यत्र षष्ठ्यर्थभूतेऽदृष्टात्मनि संबन्धेऽतिव्याप्तिनिरासाय ऐन्द्रियक-

---

1 पृथक्त्वजातिमत् H. 2 गुणः पृथक्त्वम् D. N. 3 संयोगत्वजातियोगी F., संयुक्तव्यवहारासाधारणकारणम् inserted. A. 4 विभागत्वसामान्ययुक्तो G. H. K. N. 5 गुणः विभागः D. 6 Only परत्व B. C. E. F. G. H. K. N; °सामान्ययोगि A. B. C. D. E. F. G.; परत्वजातियोगि H. N. 7 गुणः परत्वं D. 8 अपरत्व only E. F. G. N; अपरत्वजातियोगि K. H. N. 9 गुणः अपरत्वं D. 10 °भिन्नत्वेनापीदं विशे° P.

**बुद्धित्वसामान्यवती आत्माश्रयः प्रकाशो बुद्धिः ॥ ९३ ॥ सुखत्वसामान्यवन्निरुपाध्यनुकूलवेद्यं सुखम् ॥ ९४ ॥ दुःखत्वसामान्यवन्निरुपाधिप्रतिकूलवेद्यं दुःखम् ॥ ९५ ॥ इच्छात्वसामान्यवत्यर्थित्वलक्षणेच्छा ॥ ९६ ॥ द्वेषत्वजातिमान् प्रज्वलनात्मको द्वेषः ॥ ९७ ॥ प्रयत्नत्वसामान्यवान् प्रयत्नव्यवहारासाधारणकारणं प्रयत्नः ॥ ९८ ॥ गुरुत्वत्वजातिमदे-**

---

त्वेन चेत्यप्याहुः । इन्द्रियलक्षणं चानन्तर्भूतसंयोगमपि संभवतीति नान्योन्याश्रयः । विभागपरत्वापरत्वलक्षणानि संख्यालक्षणेन व्याख्यातानि ॥

**आत्माश्रयः प्रकाश** इति । प्रकाशपदवाच्य इत्यर्थः । प्रदीपप्रभादेरपि प्रकाशपदवाच्यतया तद्व्यावृत्त्यर्थमात्माश्रय इति । इच्छादिव्यावृत्त्यै प्रकाश इति । ननु कर्मादिव्युत्पन्नप्रकाशपदवाच्यत्वमिच्छादेरपीत्यतिव्याप्तिरिति चेन्न । प्रोत्तरकाशिधात्वर्थस्यैव लक्षणत्वात् । इच्छादेश्च कर्माद्यर्थघञर्थत्वात् । न चैवं प्रदीपादिव्यावर्तकपूर्वपदवैयर्थ्यम् । प्रकाशेरनेकार्थतया ज्ञानालोकसाधारणतयालोकव्यावर्तनार्थत्वात् ॥ **निरुपाध्यनुकूलवेद्यमिति** । अनुकूलमिच्छाविषयः उपाधिः प्रयोजकः स चानुकूलपदसमर्पितेच्छोपरागादिच्छात्मा पर्यवस्यति । निरस्तश्च तत्संबन्धादिच्छाप्रयुक्तेच्छाविषय इत्यक्षरार्थः । जन्येच्छाजन्येच्छाविषयो भाव इति तु तात्पर्यार्थः । तत्र दुःखाभावव्यावृत्त्यै भावपदम् । वेद्यपदं तु लक्ष्यस्य ज्ञानासिद्धिनिरासायैव ॥ **निरुपाधिप्रतिकूलवेद्यमिति** । द्वेषाप्रयुक्तद्वेषविषय इत्यर्थः । अहिकण्टकादौ तु द्वेषस्तत्साध्यदुःखप्रयुक्त इति न तत्रातिव्याप्तिः । वेद्यपदं तु पूर्ववत् ॥ **अर्थित्वेति** । अर्थित्वमर्थिव्यवहारः स कार्यतया लक्षणं चिह्नं लिङ्गं गमकं यस्याः सा तथा । यद्विशेषणयोगज्ञानादर्थी याचक इत्यादिव्यवहारः सा इच्छेत्यर्थः । तेनात्मधर्मोऽर्थित्वं कथमिच्छालक्षणं कथं वा स्वयोगादर्थिव्यवहारप्रयोजके धने नातिव्याप्तिरिति निरस्तम् ॥ **प्रज्वलनात्मक** इति । क्रोधादिपदवाच्य इत्यर्थः ॥ **प्रयत्नव्यवहारेति** । प्रयत्नविशिष्टव्यवहारत्वावच्छिन्नकार्यतानिरूपितज्ञानवृत्तिकारणताया विषयत्वेनावच्छेदकः प्रयत्न इत्यर्थः ॥

**एकवृत्तीति** । अदृष्टादिव्यावृत्त्यर्थमसमवायीति । तन्तुरूपादिव्यावृत्त्यै

---

१ अर्थप्रकाशः A.; गुणो बुद्धिः N. २ दुःखत्वजातियोगि D. F. H. K. ३ द्वेषत्वसामान्ययोगि A.; °सामान्यवान् H. K. ४ प्रयत्नत्वसामान्ययोगी A. ५ गुरुत्व only B. E. F. G. H. K. N. ६ The whole sentence om. $P_4$. ७ निरस्ततत्संबंधा° etc. $P_1$. ८ लक्षणस्य $P_3$. $P_4$. ९ तत्साध्यदुःखद्वेषप्रयुक्तः $P_3$.

कवृ[1]त्त्याद्य[2]पतनासमवायिकारणं गुरुत्वम् ॥ ९९ ॥ द्रवत्वत्वे[3]-

पतनेति । उद्गच्छतः कन्दुकादेरुपरिकराघातादधःपतनदर्शनात्तदसमवायिकारणं संयोगं व्यावर्तयितुमेकवृत्तीति ॥ ननूद्गमनवेगप्रतिबद्धगौरवतया यावद्वेगं[4]मपततोऽप्युपरिकरसंयोगादुन्मुखवेगविनाशे निष्परिपन्थिनो गुरुत्वादेव पतनं न करसंयोगात् । असत्यपि करसंयोगे वेगक्षये स्वतोऽपि पतनदर्शनात् । न च फलादिपतनहेतुर्वाय्वादिसंयोग एवं व्यावर्त्यस्तत्रापि प्रतिबन्धकवृन्तसंयोगापगमे गुरुत्वादेव पतनसंभवात् । वदन्ति च । संयोगाद्यभावे गुरुत्वात्पतनमिति चेत् । न । प्रतिबन्धकवृन्तसंयोगापगमो हि न वायुसंयोगादेव । विद्यमानाश्रयसंयोगस्य विभागैकनाश्यत्वात् । नापि गुरुत्वप्रयुक्तात्पतनकर्मणः । सति प्रतिबन्धके वृन्तसंयोगे गुरुत्वस्य पतनाजनकत्वात् । किंतु विभागद्वारा पूर्वसंयोगविरोधिनः पवनसंयोगजात्पतनकर्मण एवेति युक्तं संयोगस्य पतनासमवायिकारणत्वमिति साधूक्तमेकवृत्तीति । क्व तर्हि संयोगाद्यभावे गुरुत्वात्पतनम्[6] । न्यञ्चुखकरतलाकलितमुक्तमुक्ताफलादावेवेति गृहाण । आद्यत्वेन चात्र पतनं विशेषणीयमतो नोत्तरपतनासमवायिकारणे वेगेऽतिव्याप्तिः । केचित्तु वेगः पतनकारणमेव न भवति भवति चेन्निमित्तमेव नासमवायिकारणम् । असमवायिकारणं तु सर्वत्र जातिविशेषावच्छिन्नेष्वाद्यादिपतनेषु गुरुत्वमेवेति वदन्ति । केचित्तु पतनासाधारणं कारणमिति पाठमाश्रित्य पतनप्रागभावे साधारणासाधारणभेदभिन्नकारणताश्रयेऽतिव्याप्तिमाशङ्क्य साधारणभिन्नत्वमसाधारणत्वम् । न च प्रागभावोऽपि तत्त्वेन कार्यमात्रसाधारणोऽपि तत्तत्प्रागभावत्वेन साधारणभिन्न एव । एवमपि हि कारणतावश्यमाश्रयणीया । अन्यथा यत्किंचित्प्रागभावसत्त्वे जातमपि पुनर्जायेत । न हि कारणीभूततत्तत्क्षणविशेषाभावादेव कार्यानुदयोपपादनं युक्तिमत् । तथा सति दण्डादिसकलकारणविशेषोच्छेदप्रसङ्गात् । पाकजोत्पादस्थले प्रतिनियतप्रागभावकारणताया निर्णीतत्वाच्चेति वाच्यम् । अन्योन्याभावस्य व्याप्यवृत्तित्वेनात्यन्ताभाववदवच्छेदभेदेनावृत्तेरिति परिहृत्याप्यभ्युच्चयमाहुः । अग्रे वृक्षः कपिसंयोगी न मूले इति प्रतीतिबलादन्योन्याभावस्यापि स्फुटमव्याप्यवृत्तित्वम् । सविशेषणे हीत्यादिन्यायेन संयोगात्यन्ताभावमात्रावलम्बनत्वे तु घटः पटो न भवतीत्यादिप्रतीतीनामपि पटत्वाद्यत्यन्ताभावावलम्बनत्वस्य सुवचत्वेनान्योन्याभाव एवोच्छिद्येतेति कस्य व्याप्याव्याप्यवृत्तिविचारः स्यादिति । तन्न । घटत्वतद्वृत्तिधर्मप्रकारकघटघटत्वप्रतियोगिज्ञानवैचित्र्येण तज्जन्यज्ञाने[7] विषयवैचित्र्यकल्पनात् । न हि घटः पटो न भवतीत्यत्र प्रकारीभवति

---

१ एकव्यक्ति° A. २ आद्य om. B. H. K. ३ द्रवत्व only. B. C. E. F. G. H. K. N. ४ यावद्व्योम पततोऽप्यु° etc. P3. ५ संयोगादिर्व्यावर्त्यः P3. ६ पतनमिति P3. ७ °ज्ञाने P4.

जातिमदेकंवृत्त्याद्यस्पन्दनासमवायिकारणं द्रवत्वम् ॥ १०० ॥
स्नेहत्वसामान्यवान् द्रवत्वत्वशून्यः संग्रहासाधारणकारणं स्नेहः

घटत्वेऽपि प्रकारान्तरमवभासते न चानवभासमाने तस्मिन्निःप्रकारकादपि प्रतियोगिज्ञानादभावप्रत्यक्षमुदेतुमलम् । ससंबन्धिकपदार्थप्रत्यक्षस्य संबन्धितावच्छेदकप्रकारकतद्धीसाध्यत्वात् । अतः पटत्वप्रकारकपटज्ञानात्तदभावोऽयमित्यवधारिते प्रतियोग्यारोपहेतुकनिषेधधीविषयत्वेन संसर्गाभावभिन्नत्वावगमादन्योन्याभाव एवायमित्यवगम्यते । तदिह क्वान्योन्याभावोच्छेदप्रसङ्गो येन सविशेषणे हीत्यादिन्यायेन संयोगात्यन्ताभावावलम्बनतोदाहृतप्रतीतेर्निषिध्येत । अस्ति चात्यन्ताभावप्रतियोगिताभिमतस्य संयोगस्य संबन्धितावच्छेदकप्रकारकं ज्ञानमिति न घटत्वादितुल्यतापीत्यलमनेन । अस्मिंश्च पक्षे एकवृत्तीति स्वरूपकथनम् । संयोगस्य कर्ममात्रसाधारणतयैव व्यवच्छेदात् । अत एव वेगेऽतिव्याप्तिर्न । तस्य कर्ममात्रसाधारणत्वादिति आद्यत्वविशेषणप्रक्षेपोऽप्ययुक्त इति द्रष्टव्यम् ॥ द्रवत्वत्वशून्य इति । तद्भिन्न इत्यर्थः । एकेनैव भावप्रत्ययेन द्वितीयभावस्यापि लाभाद्द्रवत्वगतजातिशून्य इति वा । इदं च द्रवत्वेऽतिव्याप्तिवारणाय । स्निग्धादपि प्रतिबद्धद्रवत्वात्करकादेः संग्रहानुदयेन स्नेहस्येव द्रवत्वस्यापि संग्रहासाधारणकारणत्वात् । संग्रहः स्वारम्भस्य धारणविकर्षणादिक्षमतासंपादकः संयोगविशेषस्तत्कारणतामात्रं कालादेरपीति तद्व्यावृत्त्यर्थमसाधारणेति । दण्डादिव्यावृत्त्यै संग्रहेति । असाधारणत्वं साधारणभिन्नत्वमेवेति न संग्रहप्रागभावेऽतिप्रसङ्गः । न चाव्यभिचारिणः सांसिद्धिकद्रवत्वादेव तदुत्पत्तेर्न स्नेहः संग्रहहेतुरित्यसंभवो लक्षणस्येति वाच्यम् । अनुभवविरुद्धद्रवत्वाद्युत्कर्षप्रयोजकभावस्य पिण्याकचणकचूर्णादिप्रयुक्तचिक्कणतोत्कर्षेण संग्रहोत्कर्षस्य तयोः कार्यकारणभावाभावेऽसंभवप्रसङ्गात् । पिण्याकादिचूर्ण एव स्नेहोऽस्तु किं तद्व्यङ्ग्येन जलस्नेहेनेति तु प्रतिनियतगुणव्यवस्थापनावसरे निराकरिष्यामः । तथापि जलस्नेहद्रवत्वयोः संग्रहहेतुत्वे या मूर्तक्रिया अदृष्टाद्वारकयद्यधिकरणगुणनिमित्ता सा तत्समानाधिकरणगुणजन्या स्पर्शवद्वेगवद्द्रव्याभिघातजक्रियावदिति व्याप्त्या जलसंयोगस्यापि तद्धेतुतावश्यंभावात्संयोगिनो जलस्यापि असति बाधके संग्रहहेतुत्वमिति तत्रातिव्याप्तिरिति चेत् न । तदुभयवैशिष्ट्याधारत्वेनाजहत्स्वार्थलक्षणया द्रवत्वतद्वृत्तिजात्योर्लाभेन तदुभयशून्यत्वस्य द्रवत्वशून्यपदार्थत्वाज्जलस्य द्रवत्वाश्रयत्वादिति दिक् ॥ स्वोत्प-

---

१ एकव्यक्ति° A. C. F. २ आद्य om. in all Mss. except F. N. ३ द्रवत्वशून्यः A. C. $P_1$. $P_2$. D. E. F. G. H. K. N.; द्रव्यत्व° (?) B. ४ °रोपाहेतुक $P_3$. ५ संसर्गाभावे $P_3$. ६ °प्रतीतिर्नि° $P_3$. ७ °भावपिण्याक° $P_3$.

**॥ १०१ ॥ संस्कारत्वजातिमान् स्वोत्पत्त्यवस्थापादको गुणः संस्कारः ॥ १०२ ॥ धर्मत्वसामान्यवान् सुखासाधारणकारणं**

त्यवस्थापादक इति । स्वोत्पत्तिकालीनस्य स्वाश्रयस्य या कर्मज्ञानार्जवशालितावस्था तस्याः पुनरसाधारणकारणत्वमित्यर्थः । अत एवेश्वरेच्छादौ नातिप्रसङ्गः । स्वोत्पत्तिकालीनसंयोगितावस्थापादकं कर्म व्यावर्तयितुं गुण इति । ननु स्वोत्पत्तिकालीना स्वाजन्या स्वजनककर्मज्ञानार्जवावस्था कथं स्वापाद्या । तज्जातीयस्यापादनविवक्षायां तु यद्यत्यन्तं साजात्यमभिमतं तदानुभवावस्थानापादिकायां भावनायाव्याप्तिः । यदि यथाकथंचित्तदा जनकज्ञानसंपन्नां गुणवत्तां प्रयत्नादिगुणजननेनेच्छादिकमप्यापादयतीति स्फुटैव तत्रातिव्याप्तिः । कर्मजे कर्मजनके संयोगे तु स्फुटतरैव । यदीयं यदवस्थोत्पाद्यस्तत्र तदवस्थापादक इति विवक्षितेऽपि प्राचीनरूपशालिनि वृत्तस्य भाविरूपादिकं तत्रैवापादयतस्तेजःसंयोगस्याव्याप्तिरेव । एवं ज्ञानधारान्तर्गतज्ञानानामपि । अथ यद्रूपपुरस्कारेण यदवस्था स्वोत्पत्त्युपयोगिनी तत्पुरस्कारेण तत्र तदापादकत्वं विवक्षितम् । अनुभवावस्थापि न तत्त्वेन भावनोत्पत्तावुपयुज्यते । किंतु उपेक्षाभिन्नविशिष्टनिश्चयत्वेन । सा चावस्था पुरस्कृततद्रूपा स्वाश्रये भावनया जन्यत एवेति नाव्याप्तिः । स्वाश्रयकर्मजसंयोगेन तत्रैव कर्मानापादनान्नातिव्याप्तिरिति । तेजःसंयोगोत्पत्तौ तु घटादे रूपवदवस्थाया अनुपयोग एवेति न दोषः । अत एवाहुः । 'यज्जातीयसमुत्पाद्य' इत्यादीति मतम् । तन्न । शिलामभिहत्य परावृत्तेऽश्मखण्डादावनुभूयमानस्य कर्मणः स्वाश्रयकर्मजसंयोगजनितत्वेन तज्जनकसंयोगे तथाप्यतिव्याप्तिः । स्थितस्थापकस्य कारणगुणपूर्वकत्वेन तदुत्पत्तावार्जवावस्थाया अनुपयोगाच्चेति चेत् । न । अनुत्पाददशायामव्याप्तिपरिहाराय तज्जातीयत्वविवक्षाया आवश्यकत्वे स्वोत्पत्त्यवस्थापादकशब्देन वेगं भावनां वा विवक्षित्वा गुणपदसमभिव्याहारबलेन भावनावृत्तिगुणत्वसाक्षाद्व्याप्यजातिमान्संस्कार इति लक्षणात् । न च पौनरुक्त्यम् । जातिगर्भत्वेऽप्युपहितानुपहितभेदभिन्नतद्गर्भत्वेनादोषादित्यलमतिपल्लवेन ॥ **सुखासाधारणकारणमिति** । सुखत्वावच्छिन्नकार्यतानिरूपितकारणताश्रय इत्यर्थः । पारदार्यादिषु सुखमपि धर्मजमेवेति नासंभवः । न च तथात्वे नरकफलत्वानुपपत्तिः । निषिद्धस्य पारदार्यस्यैवा-

१ °जातियोगी N. २ असाधारणं कारणं $P_2$. ३ च for स्व $P_4$. ४ अनुभवावस्थायां भावनायां $P_2$. ५ यदीया यदवस्था तत्र तदीयावस्थापादकसजातीयविकल्पा इति विवक्षिते etc. $P_1$; सजातीयत्वविकल्पाभ्यामुक्तदोषतादवस्थ्याच्चेति between विवक्षितेऽपि and प्राचीन° $P_3$. ६ नातिव्याप्तिः $P_4$. ७ तदुत्पत्तावार्जवावस्थापादकशब्दे etc. with the intervening words om. through the mistake of the scribe. $P_3$. ८ अतिव्याप्ति° $P_1$. ९ सु om. $P_3$.

धर्मः ॥ १०३ ॥ अधर्मत्वसामान्यवान् दुःखासाधारणकारणमधर्मः ॥ १०४ ॥ शब्दत्वसामान्ययोगी[1] श्रोत्रग्राह्यो गुणः शब्दः ॥ १०५ ॥

उत्क्षेपणत्वजातिमदूर्ध्वदेशसंयोगकारणं[2] कर्मोत्क्षेपणम् ॥ १०६ ॥ अपक्षेपणत्वजातिमदधोदेशसंयोगकारणं[3] कर्मापक्षेपणम् ॥ १०७ ॥ आकुञ्चनत्वजातिमद्वक्रत्वापादकं कर्माकुञ्चनम् ॥ १०८ ॥ प्रसारणत्वजातिमदृजुत्वापादकं[4] कर्म प्रसारणम् ॥ १०९ ॥ गमनत्वजातिमदनियतदेशसंयोगकारणं[5][6] कर्म गमनम् ॥ ११० ॥

व्यापकमात्रं सामान्यं परम् । व्याप्यमात्रं सामान्यमपरम् । व्याप्यव्यापकोभयरूपं[7] सामान्यं परापरम् ॥ १११ ॥

---

धर्मद्वारा नरकजनकत्वेन तत्फलभूतस्य सुखस्यातत्फलकत्वात् ॥ दुःखासाधारणकारणमिति । दुःखत्वावच्छिन्नकार्यतानिरूपितकारणताश्रय इत्यर्थः । अत्रापि प्रागुक्तन्यायेन सितासितसरित्संभेदे स्नानसंभूतशीतवेदनाया अधर्मजत्वान्नासंभव इति ज्ञेयम् । शब्दलक्षणं रूपादिलक्षणवद्व्याख्येयम् ॥

व्यापकमात्रमिति । अपरनिवृत्त्यै व्यापकेति । परापरनिवृत्त्यै मात्रमिति । ननु परस्य सत्तासामान्यस्य प्रमेयत्वादिव्याप्यत्वादसंभवः । न च स्वभिन्नजात्यव्याप्यत्वं विवक्षितम् । परापरभावत्वाद्युपाधावतिव्याप्तेरिति चेन्न । स्ववृत्तिसामान्यविभाजकोपाधिमदन्यूनवृत्तित्वस्य लक्षणत्वात् । तत्र सत्तावृत्तिः सामान्यविभाजकोपाधिर्जातित्वम् । तद्वदन्यूनवृत्तिरेव सत्तेति नासंभवः । भावत्ववृत्तिश्च सामान्यविभाजकोपाधिरुपाधित्वम्[8] । तद्वत्प्रमेयत्वादिन्यूनवृत्त्येव भावत्वमिति नातिव्याप्तिरपि । प्रमेयत्वादिकं च स्ववृत्तिसामान्यविभाजकोपाध्युपाधित्ववदभिधेयत्वाद्यन्यूनवृत्त्येवेति नौपाधिकपरसामान्याव्याप्तिरपीति द्रष्टव्यम् । एवं स्ववृत्तिसामान्यविभाजकोपाधिमदनधिकवृत्तित्वं व्याप्यमात्रत्वम् । स्ववृत्तिसामान्यविभाजकोपाधिमन्न्यूनवृत्तित्वे सति तदधिकवृत्तित्वं व्याप्यव्यापकरूपत्वं क्रमेणोत्तरलक्षणयोर्द्रष्टव्यम् ।

---

१ शब्दत्वजातियोगी A. B. C. D. F. G. N. K. २ ऊर्ध्वदेशसंयोगासमवायिकारणं A. D. F. ३ अधोदेशसंयोगासमवायिकारणं A. ४ प्रसारणत्वसामान्यवत् N. ५ गमनत्वसामान्यवद् D. ६ अनियतदेशसंयोगासमवायिकारणं A. ७ व्याप्यव्यापकसामान्यं C.; उभय om. D. F. G. H. K. N. ८ °पाधिमत्त्वम् P₄.

**अनादिः सान्तः प्रागभावः ॥ ११२ ॥ सादिरनन्तः**

अनादिरिति । आकाशादिव्यावृत्त्यै सान्त इति । घटादिव्यावृत्त्यै अनादिरिति । नन्वनादित्वं प्रागभावाप्रतियोगित्वमेवेत्यात्माश्रयः । अनुत्पत्तिकत्वस्य तदर्थत्वेऽप्युत्पत्तेः प्रागभावनिरूप्यत्वेन तत्तादवस्थ्यम् । सान्तत्वं च ध्वंसप्रतियोगित्वं । ध्वंसश्च सादिरनन्त इति प्रागभावगर्भं इत्यन्योन्याश्रयोऽपि । गन्धानाधारसमयानाधाराभावस्य च प्रागभावपदार्थत्वे महाप्रलयमनभ्युपगच्छतो मीमांसकादेर्विद्यमानप्रागभावप्रतियोगित्वावगाहिभविष्यद्व्यवहारानुपपत्तिः । गन्धान्तमात्रप्रलये मानाभावेन गन्धध्वंसोत्तरभाविप्रागभावेष्वव्याप्तिश्च । समयस्य[1] च कारणतामनन्तर्भाव्य निरूपयितुमशक्यत्वेन तदन्तर्गतप्रागभावापेक्षया चक्रकमपि ॥ अत्राहुः । भविष्यत्पदासाधारणविषयत्वं प्रागभावत्वम् ॥ ननु भविष्यत्पदप्रवृत्तिनिमित्तान्तर्गतप्रागभावत्वाज्ञाने[2] भविष्यत्पदप्रयोगस्यैवानुपपत्तिः । न चैवं प्रयत्नव्यवहारासाधारणं कारणं प्रयत्न इत्यादिलक्षणोच्छेदः । प्रयत्नत्वजातेरपि सद्भावेन तदुपजीवनप्रवृत्तस्य व्यवहारस्यापि लक्षणत्वसंभवात् । प्रागभावत्वस्य चैतदतिरिक्तस्यानिर्वचनान्न प्रकृते तत्संभव इति चेन्न । पूर्वपूर्वपदप्रयोगविषयत्वज्ञानादुत्तरोत्तरपदप्रयोगोपपत्तेः । न चाविषयत्वदशायामव्याप्तिः । दशायास्तद्वैशिष्ट्यस्य वा अप्रागभावत्वेनालक्ष्यत्वात् । लक्ष्यस्य च प्रागभावस्य विषयत्वादेवाव्याप्त्यनवकाशात् । न हि तत्तत्कालीनविषयत्वं लक्षणं येन सा स्यात् ॥ किंच । अव्याप्तिर्नाम भागासिद्धिरेव । न च किंचिदवच्छेदकावच्छिन्नपक्षावृत्त्या सा भवति । धूमरहितप्रदेशावच्छिन्ने पर्वते धूमावृत्त्या भागासिद्ध्यापत्तेः । एवमपि सा भवत्येवेत्यत एव धूमवत्पर्वतत्वं पक्षतावच्छेदकमाहुरिति चेन्न । निर्धूमपर्वतव्यक्त्यन्तरं व्यावर्तयितुं हि तत् न तु तमेव देशकालविशेषावच्छिन्नम् । [3]असामर्थ्यात् । धूमसंबन्धिपरं हि धूमवत्पदं धूमसंबन्धिभिन्नमेव व्यावर्तयति । न तु तमेव क्वचित्कदाचिद्धूमसंबन्धेनाप्युपपन्नधूमवद्व्यपदेशम् । पाकजरागदशायामश्यामेऽपि प्राचीनश्यामसंबन्धाभिसं(ब)न्धिना श्यामोऽयं घट इति ॥ मूलावच्छेदेन कपिसंयोगशून्येऽपि अग्रावच्छिन्नतत्संयोगाभिप्रायेण सामान्यतोऽयं वृक्षः कपिसंयोगीति व्यवहारदर्शनात् । अतो यस्यार्वाग्भागे परभागे वा धूमसंबन्ध आसीदस्ति भविष्यति वा स सर्वः सर्वदा धूमवानेवेति न तेन तस्य व्यवच्छेदः किंतु धूमवद्भिन्नस्यैवेति । अवच्छेदकभेदेनावृत्त्यापि भवन्ती प्राचीना भागासिद्धिर्दुरुद्धरा[4] प्रसज्येत । तस्मान्नैतादृशविषये[5] भागासिद्धिः पक्षतावच्छेदकव्यापकताया[6] अविघाते भागासिद्धेरकिंचित्करत्वाच्च । एतेन गुणवद्द्रव्यमित्यादीनि

[1] समवायस्य च $P_2$. [2] प्रागभावज्ञाने (?) $P_3$. [3] From असामर्थ्यात् etc. to मूलावच्छेदेन left out in $P_3$. [4] दुर्निवारा $P_2$. [5] °तादृशि विषयभागा° $P_4$. [6] पक्षतावच्छेदकव्यापकताया अविघाते om. $P_3$.

प्रध्वंसाभावः ॥ ११३ ॥ अनादिरनन्तः संसर्गाभावोऽत्यन्ताभावः ॥ ११४ ॥ तादात्म्यनिषेधोऽन्योन्याभावः ॥ ११५ ॥

नित्यत्वं प्रध्वंसविरहः ॥ ११६ ॥ अनित्यत्वं प्रध्वंसवत्त्वम् ॥ ११७ ॥ निरवयवः क्रियावान् परमाणुः ॥ ११८ ॥ द्रव्यसमवायिकारणमवयवः ॥ ११९ ॥ प्रागभाववत्कार्यम्

लक्षणान्यपि यथाश्रुतानि स्वस्थानि । उत्पत्तिकालावच्छेदेन गुणावृत्तावपि संयोगित्वस्येव गुणवत्त्वस्य द्रव्यत्वव्यापकताया अविघातात् । द्रव्यत्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वात्तस्येति । प्रागभावत्वमखण्डोपाधिरेवेत्यपि कश्चित् ॥ **सादिरनन्त** इति । स्वप्रागभावानवच्छिन्नकालत्वव्यापक इत्यर्थः । तेनान्तो ध्वंस एवेत्यात्माश्रयशङ्कानवकाशा । प्रागभावलक्षणं चानन्तभूतध्वंसमिति नान्योन्याश्रयोऽपि । न च नित्येऽनित्ये वा भावेऽतिव्याप्तिः । पूर्वस्य प्रागभावाप्रसिद्धेरुत्तरस्य च ध्वंसदशायामसत्त्वात् ॥ अत्यन्ताभावलक्षणे ध्वंसं व्यावर्तयितुम**नादि**रिति । प्रागभावम**नन्त**मिति । नित्यभावम**भाव** इति । अन्योन्याभावं च **संसर्गे**ति । न च संसर्गान्योन्याभावेऽतिव्याप्तिः । अधिकरणे प्रतियोग्यारोपहेतुकनिषेधधीविषयाभावत्वस्य संसर्गाभावपदार्थत्वात् ॥ **तादात्म्यनिषेध** इति । प्रतियोगितावच्छेदको धर्मस्तादात्म्यम् । ज्ञानयोर्जन्यजनकभावस्य ज्ञेययोरारोपात् । धूमाद्वह्निमानितिवत् उभयत्र ज्ञानलक्षणया षष्ठीतत्पुरुषमुपपाद्य अधिकरणे प्रतियोगितावच्छेदकारोपहेतुकनिषेधधीविषयत्वमेव तदर्थोऽवगन्तव्यः । तेन तादात्म्यात्यन्ताभावे नातिव्याप्तिरिति ध्येयम् ॥

**नित्यत्वं** ध्वंसाप्रतियोगित्वम् । तेन यथाश्रुते बुद्ध्यादिध्वंसवत्यात्मादौ नाव्याप्तिः ॥ **अनित्यत्वं** ध्वंसप्रतियोगित्वम् । तेन तत्रैव नातिव्याप्तिः ॥ **निरवयवः क्रियावा**निति । अनारब्धः समवायेन क्रियावानित्यर्थः । तेन न द्व्यणुकाद्यवयवानिष्क्रान्ते परमाणावव्याप्तिर्यथाश्रुते अवयवानारभ्यत्वस्य तदर्थत्वे अवयववैयर्थ्यं च निरवकाशम् । कालव्यावृत्त्यै समवायेनेति । आकाशादिव्यावृत्त्यै क्रियावानिति । प्रागविभक्तमपि परमाणुलक्षणप्रविष्टमवयवं लक्षयति । **द्रव्येति** । गगनादिव्यावृत्त्यै द्रव्येति । संयोगादिव्यावृत्त्यै समवायीति । कारणपदं प्रामादिकम् ॥ **प्रागभाववदि**ति । प्रागभावप्रतियोगीत्यर्थः । तेन नात्मादा-

---

१ संसर्गाभावः om. H.; कालत्रयेऽपि संसर्गाभावो etc. K. N. २ तादात्म्याभावः C. ३ नित्यत्वं प्रध्वंसाभावरहितत्वं C. ४ The definition of कार्य follows that of अन्त्यावयवि in almost all the Mss and the same order is followed by Jin. and Mita., but Pad. follows the order in the text here. ५ °कालावच्छिन्ने. $P_4$. ६ नित्यभावं वारयितुं $P_2$. ७ The whole clause om. $P_4$. ८ न om. $P_4$.

॥ १२० ॥ द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवि ॥ १२१ ॥ भोगायतनमन्त्यावयवि शरीरम् ॥ १२२ ॥ स्वसमवेतसुख-

व्रतिव्याप्तिः ॥ उपोद्घातेनान्त्यावयविनं लक्षयति ॥ **द्रव्यानारम्भकमिति** । द्रव्यसमवायितावच्छेदकवद्भिन्नमित्यर्थः । तत्राद्यमसंभवव्यावृत्त्यै । द्वितीयं निमित्तदण्डाद्यव्याप्तिव्यावृत्त्यै[1] । तृतीयमनारब्धद्रव्यविनष्टतन्त्वादिव्यावृत्त्यै । तुरीयमनुत्पन्नस्पर्शतन्त्वादिनिवृत्त्यै[2] तदा तस्य तद्वाहित्येऽप्यन्योन्याभावस्य व्याप्यवृत्तितया तद्वद्भेदासंभवात् । वस्तुतस्तु तत्तद्द्रव्यसमवायितावच्छेदकान्युत्पत्तिविशिष्टानि[3][4] तन्त्वादीन्येव द्रव्यसमवायिकारणतावच्छेदकत्वेनानुगतीकृत्य तदत्यन्ताभाव एव लक्षणं वा वाच्यम् । अन्यथा स्पर्शवदनन्त्यावयवित्वस्यैव सामान्यतो द्रव्यसमवायितावच्छेदकस्याभिधानेऽन्योन्याश्रयप्रसङ्गात्[5] । गगनादिव्यावृत्त्यै कार्येति । कार्यगुणादिव्यावृत्त्यै द्रव्यमिति ॥ यदर्थमन्त्यावयविलक्षणं तदाह । **भोगायतनमिति** । भोगायतनवृत्त्यन्त्यावयविमात्रवृत्तिजातिमदित्यर्थः । अतो न घटादावतिव्याप्तिर्न वा सुषुप्तशरीरेऽव्याप्तिः । न वा सत्तयान्यत्रातिव्याप्तिः । न चाहल्याशरीरवृत्तिप्रतिमात्वजातिमत्त्वात्प्रतिमास्वतिव्याप्तिः । शिलावस्थायां भोगे मानाभावेन प्रतिमात्वस्य भोगायतनवृत्तित्वासिद्धेः । न चेशस्य नृसिंहादिशरीरे भोगानवच्छेदकेऽव्याप्तिः । तदुपासनालब्धतदाकारेषु योगिषु तज्जातीयस्यापि भोगावच्छेदकत्वेनोपपत्तेः[6] । करादिनिवृत्त्यै अन्त्यावयवीति । न च राहुमस्तकेऽनन्त्यावयविन्यव्याप्तिः । तस्याशरीरत्वेनालक्ष्यत्वात् । यद्यपि भोगपदार्थान्तर्गतसाक्षात्कारमात्रगर्भशरीरलक्षणसंभवे भोगपदोपादानं तल्लक्षणाभिधानं चायुक्तम् तथापि वृद्धप्रसिद्धलक्षणानुगमनायैव तदुपादानम् ॥ **स्वसमवेतेति** । घटादिसाक्षात्कारव्यावृत्त्यै सुखदुःखान्यतरेति । तत्राप्येकैकमात्रोपादाने एकैकसाक्षात्कारेऽव्याप्तिः । युगपदुभयोपादाने चासंभवः । अतः अन्यतरेति । सुखान्यत्वे सति यद्दुःखान्यत् तदन्यत्वमन्यतरत्वमिति नाननुगमः । विशिष्टभावस्य चाखण्डत्वान्नाव्याप्तिवारकविशेषणवैयर्थ्यम् । ईश्वरसाक्षात्कारं व्यावर्तयितुं स्वसमवेतेति । यद्वृत्तिः साक्षात्कारो भोगत्वेन लक्ष्यस्तत्समवेतसुखदुःखान्यतरविषयसाक्षात्कार इत्यर्थः । भाविसुखदुःखादिगोचरसामान्यलक्षणादिजन्यसाक्षात्कारव्यावृत्त्यै समानकालीनत्वमपि विशेषणमत्र द्रष्टव्यम् । यदा तु कर्तृकरणे कृतेति तृतीयातत्पुरुषो विवक्ष्यते तदा यथाश्रुतं स्वसमवेतेत्यपि निरर्थकमेव । पुरुषान्तरीयसुखादिसाक्षात्कारस्य स्वीयभिन्नकालसाक्षात्कारस्य च सुखादिविषयाजन्यत्वात् । अत

---

१ °दण्डाद्यतिव्याप्ति° $P_2$. २ भिन्नपदं after तुरीयं $P_2$. ३ समवायिकारणता $P_4$. ४ उत्पत्तिशिष्टानि $P_2$. ५ समवायिकारणता $P_4$. ६ भोगानवच्छेदकतोपपत्तेः । $P_2$. भोगावच्छेदकतोपपत्तेः $P_4$. After this $P_2$. has 'न च शरीरत्वजात्यनभ्युपगमबीजपृथिवीत्वादिसंकरतोऽस्यादजातित्वं नृसिंहत्वादेः । तच्छरीरस्य तैजसमात्रत्वात् ।'

दुःखान्यतरसाक्षात्कारो भोगः ॥ १२३ ॥ यदवच्छिन्न आत्मनि भोगस्तदायतनम् ॥ १२४ ॥ साक्षात्कारि ज्ञानकरणमतीन्द्रियमिन्द्रियम् ॥ १२५ ॥ ज्ञायमानतया आत्मनो भोगकारणं विषयः ॥ १२६ ॥

---

एव स्वपदार्थखण्डनमप्यनवकाशमिति द्रष्टव्यम् ॥ यद्यप्यायतनपदस्याधिकरणार्थत्वेऽप्यनन्याव्यवविलादेव नात्मादावतिव्याप्तिर्वा वासंभवः अवच्छेदकस्य शरीरादेरपि वनादेः सिंहादिनादमिव भोगं प्रत्यधिकरणत्वात् तथापि गुणस्य सतो भोगस्याधिकरणमौत्सर्गिकं समवाय्येव बुद्धिमध्यारोहेदित्यधिकरणतावच्छेदकत्वं तदर्थ इति स्पष्टयति ॥ **यदवच्छिन्न** इति । **भोग** इति । प्रकृतान्वयवलब्धानुवादः । अतो न शरीरलक्षणे भोगपदवैयर्थ्यमाशङ्कनीयम् ॥ एतावता शरीरलक्षणं निर्वाह्येन्द्रियलक्षणमाह । **साक्षात्कारीति** । यद्यपि साक्षात्कारत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं न तदर्थः साक्षात्त्वस्य जन्याजन्यवृत्तित्वेन कार्यतानवच्छेदकत्वात् । जन्यसाक्षात्कारगर्भमपि तन्न । तथा कारणतावच्छेदकस्येन्द्रियत्वस्य साक्षात्कारणतागर्भत्वेनात्माश्रयप्रसङ्गात् । तथापि साक्षात्कारमात्रवृत्तिधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयव्यापारवदतीन्द्रियमिन्द्रियमिति तदर्थो द्रष्टव्यः । अत्र चेन्द्रियाधिष्ठानव्यावृत्त्यै अतीन्द्रियमिति । एवं च तत एव मननादिप्रयोज्यजातिविशेषावच्छिन्नचरमसाक्षात्कारवृत्तिकार्यतानिरूपितकारणताश्रयव्यापारवन्मननादिव्यावृत्तिः । इन्द्रियसन्निकर्षादिनिवृत्त्यै व्यापारवदिति ॥ **ज्ञायमानतयेति** । यत्साक्षात्कारो भुज्यमानसुखदुःखहेतुरित्यर्थः । विषयतया साक्षात्कारवृत्तिसुखादिहेतुतावच्छेदक इति यावत् । तेन स्वाप्नसंभोगज्ञानादपि सुखोत्पत्तेर्व्यासङ्गादिना तदज्ञाने चानुत्पत्तेस्तज्ज्ञानमेव हेतुः तदपि च सुख एव न तत्साक्षात्कारे । सति सुखे स्वापरोक्षज्ञानहेतौ विषयज्ञानविलम्बेन साक्षात्कारविलम्बाभावात् । असति तस्मिन् तदभावादेव कार्यविलम्बे विषयज्ञानविलम्बस्याकिंचित्करत्वादित्यपास्तम् । कामुकशरीरयोरन्योन्यं विषयत्वेऽप्यदोषः ॥ उपधेयसंकरेऽप्युपाधेरसंकरादिति द्रष्टव्यम् ॥

---

१ अन्यतर om. N. २ °च्छिन्नात्मनि B. C. N. ३ तद्भोगायतनम् A. ४ शरीरसंयुक्तं before साक्षा° A. ५ अतीन्द्रियं om. B. C. E. Jin. Mita. ६ ज्ञायमानतया om. B. C. E. F. Jin. Mita; ज्ञायमानं instead D. N. ७ साक्षात्त्वावच्छिन्न° $P_3$. ८ साक्षात्कारकारणता° $P_3$. $P_4$. ९ after द्रष्टव्यः, 'अत्र च साक्षात्त्वसाक्षाद्व्याप्यायाश्चाक्षुपत्वजातेरुपादानम्' $P_2$. १० 'जात्यपेक्षमेव साक्षाद्व्याप्यत्वमिह विवक्षितम् । अन्यथा साक्षात्त्वव्याप्यतया चाक्षुपत्वादेः साक्षात्त्वसाक्षाद्व्याप्यत्वाभावादसंभवापत्तेरिति दर्शयितुं जातिपदम् ।' $P_2$.

पार्थिवमात्रेन्धनं तेजो भौमम् । जलमात्रेन्धनं तेजो दिव्यम् । पार्थिवजलेन्धनं तेज औदर्यम् । निरिन्धनं तेज आकरजम् । तच्च सुवर्णादि ॥ १२७ ॥

सकलकारणयौगपद्यमुत्पत्तिः ॥ १२८ ॥ अनेकेषामेकक्षणसंबन्धो यौगपद्यम् ॥ १२९ ॥ विभागानुत्पाद्यविभागप्रागभावसंबद्धकर्मावच्छिन्नः कालः क्षणः ॥ १३० ॥ तन्मात्रावस्थायि क्षणिकम् ॥ १३१ ॥ स्थितिर्वर्तमानत्वम् । तच्च प्राक्संबद्धस्वाभावरहितस्वरूपवत्त्वम् ॥ स्वकार्यप्रागभावसंबन्धित्वं वा ॥ १३२ ॥ विनाशः प्रध्वंसः ॥ १३३ ॥

---

भौमादिलक्षणानि स्पष्टानि ॥

**सकलकारणेति** । एतन्मते कार्याव्यवहितपूर्वक्षण उत्पत्तिक्षण इति ज्ञेयम् । यौगपद्यलक्षणप्रविष्टतया क्षणं लक्षयति ॥ **विभागानुत्पाद्येति** । विभागानुत्पाद्यः कर्मज इत्यर्थः । तथा च तत्कर्मतज्जन्यविभागप्रागभावावच्छिन्नकालः क्षण इति लक्षणं पर्यवस्यति । तत्र च क्षणद्वयेऽतिव्याप्तिनिवृत्त्यै तज्जन्येत्यादि । दण्डादावतिव्याप्तिनिवृत्त्यै कर्मेति । यत्किंचित्कर्मजविभागप्रागभावयत्किंचित्कर्मावच्छिन्ने क्षणद्वयेऽतिव्याप्तिनिवृत्त्यै तदिति । नन्वीदृशकर्मावच्छिन्नकालस्य क्षणत्वे तदवस्थायिनो विश्वस्यैव क्षणिकताप्रसङ्गस्तदवस्थायितातिरिक्तायाः क्षणिकताया अभावादतोऽन्य एव कश्चिद्वस्तुमात्रानधिकरणं कालोपाधिः क्षणो वाच्यो यदनवस्थायित्वाद्विश्वस्याक्षणिकतासिद्धान्तसंरक्षणमित्यत आह ॥ **तन्मात्रेति** । तथा च मात्रार्थव्यतिरेकादेव विश्वस्याक्षणिकतानिर्वाह इति न क्षणलक्षणान्तरानुसरणमित्यर्थः॥ **तच्च प्राक्संबद्धस्वाभावविरहरूपत्वमिति** । प्राक्संबद्धः स्वाभावः प्रागभावस्तद्विरहस्तत्संसर्गाभावः स च प्रागभावस्य प्रागभावाभावात्प्रध्वंसोऽत्यन्ताभावश्च तदन्यतररूपत्वमित्यर्थः । एवं च नित्यानित्योभयवर्तमानत्वं संगृहीतं भवति । अनित्यानां प्रागभावप्रध्वंसरूपत्वात् । नित्यानां च तदत्यन्ताभावरूपत्वादिति वृद्धाः । ननु प्राक्संबद्धः स्वाभावः स्वप्रागभावः प्रागभावमात्रं वा विवक्षितम् । नाद्यः । नित्यवर्तमानतायामव्याप्तेर्नित्यानां प्रागभावाप्रसिद्धेः । न द्वि-

---

1 संबन्ध for संबद्ध D. E. F. H. K. Jin. 2 तावन्मात्रावस्थायित्वं क्षणिकत्वम् H. 3 विरह for रहित P1. P2; रूपत्वम् P1; स्वरूपत्वम् P2; तच्च प्राक्प्रध्वंसाभावरहितस्वरूपवत्त्वम् N; प्रागभावप्रध्वंसानावरहितस्वरूपवत्त्वम् Jin.; तच्च ध्वंसानवच्छिन्नप्राकालसंबन्धस्वाभावरहितस्वरूपवत्त्वम् D. 4 संबद्धत्वं A. C. 5 क्षणद्वयेव्याप्ति° P3. 6 This clause om. P4.

शरीरसंबन्धेन ज्ञानवत्त्वं क्षेत्रज्ञत्वम् [1] ॥ १३४ ॥ प्रत्यात्मसमवेतधर्माधर्मोपगृहीतत्वं प्रत्यात्मनिष्ठत्वम् ॥ १३५ ॥

सितादीनां सप्तानां सितत्वादिकं लक्षणम् ॥ मधुरादीनां मधुरत्वादिकम् ॥ गन्धयोः सुरभित्वासुरभित्वे ॥ शीतादीनां [2] शीतत्वादिकम् ॥ एकत्वादीनामेकत्वादिकम् [3] [4] ॥ अणुत्वादीनामणुत्वादिकम् ॥ १३६ ॥

कर्मासमवायिकारणकः संयोगः कर्मजः । संयोगासमवायि-

---

तीयः । अभावप्रतियोगिकाभावान्तरानभ्युपगमेन बुद्ध्यादिप्रागभावात्यन्ताभावस्य घटादिरूपत्वेनानुत्पन्नस्यापि घटादेर्वर्तमानतापत्तेः । न च प्रागभावात्यन्ताभावरूपो घट [5] एव नास्तीति क्व वर्तमानताप्रसङ्ग इति वाच्यम् । तथा सत्यभावरूपतामात्रस्यैव तथात्वसंभवे शेषवैयर्थ्यप्रसङ्गात् इत्यरुचेर्लक्षणान्तरमाह ॥ स्वकार्येति । स्वकार्यप्रागभावसमयसंबन्धित्वमित्यर्थः । तेन रूपादेः स्वकार्यप्रागभावासंबन्धित्वेऽपि तत्समयवृत्तित्वान्न तद्वर्तमानतायामव्याप्तिः । वस्तुतो विषयविषयिभावेन ज्ञानादिमति रूपादौ तत्प्रागभावोऽपि न दुर्लभः । तस्य प्रतियोगिसमवायिमात्रदेशतानियमादिति [6] ध्येयम् । न च महाप्रलये प्रागभावाभावेन तदा नित्यानामप्यवर्तमानतापत्तिः । तदत्यन्ताभावानधिकरणत्वस्य लक्षणार्थत्वात् । न चाजनकपारिमाण्डल्यादिकार्याप्रसिद्ध्या तद्वर्तमानतायामव्याप्तिः योगिज्ञानस्य विषयजन्यताश्रयेण तस्यापि ज्ञानादिजनकत्वात् । यद्यपि स्वसमयसंबन्धित्वं [7] प्रागभावसमयसंबन्धित्वात्यन्ताभावानधिकरणत्वं वा समयसंबन्धित्वमेव वा वर्तमानत्वलक्षणं भवति तथापि स्वकार्यप्रागभावसमयसम्बन्धित्वात्यन्ताभावानधिकरणत्वस्य विशिष्टस्याभावे लक्षणीकृते नास्ति वैयर्थ्यमखण्डत्वादिति हृदयम् ॥

नित्यज्ञानादिकमीश्वरलक्षणं स्पष्टत्वादुपेक्ष्य क्षेत्रज्ञं लक्षयति । शरीरसंबन्धेनेति । तृतीयार्थमात्रं पूर्वपदे विवक्षितम् । तेन सकर्णज्ञानत्वं [8] लक्षणम् । जन्यज्ञानवत्त्वमिति [9] यावत् ॥

एकत्वाणुत्वादिलक्षणेषु द्वितीयभावपरनिर्देशान्नासंभवः ॥

कर्मजसंयोगादिलक्षणेषु असमवायिपदं स्वरूपानुवादो न लक्षणान्तर्गतम् ।

---

१ नित्यज्ञानवान् परमात्मा after क्षेत्रज्ञत्वं. C.; नित्यज्ञानः परमात्मा H. २ त्रयाणां after शीतादीनां C.; शीतादीनां स्पर्शानां K.; the word लक्षण repeated everywhere H. ३ एकत्वत्वादिकम् A. ४ एकपृथक्त्वादीनामेकपृथक्त्वादिकं after अणुत्वादिकम्. A. D. K. N.; अणुत्वत्वादिकं A. B. C. E. ५ रूपो घट एव om. $P_3$. ६ °देशतानियमाभावात् $P_2$. $P_3$. ७ स्वसमवायसंबन्धित्वम् $P_2$. ८ सकारणकज्ञानं $P_3$. $P_4$. ९ जन्यज्ञानमिति $P_4$.

कारणकः संयोगः संयोगजः । कर्मासमवायिकारणको विभागः कर्मजः । विभागासमवायिकारणको विभागो विभागजः ॥ १३७ ॥ आदित्यसंयोगोत्पाद्ये परत्वापरत्वे कालकृते । आदित्यसंयोगानुत्पाद्ये परत्वापरत्वे दिक्कृते ॥१३८॥

भावनासाधारणकारणं ज्ञानं स्मृतिः ॥ अस्मृतिरूपं ज्ञानमनुभवः ॥ १३९ ॥ तत्त्वानुभवः प्रमा ॥ अतत्त्वानुभवोऽप्रमा

---

ननु कर्मजस्यापि ईश्वरप्रयत्नादृष्टादिव्यधिकरणगुणनिमित्तत्वे तत्समानाधिकरणगुणजन्यत्वावश्यंभावेन तत्संयोगजन्यत्वात् तस्य चासमवायिलक्षणाक्रान्तत्वात्संयोगासमवायिकारणकत्वमिति कथं तयोरसंकरः । विजातीयानेकासमवायिकारणत्वमेकस्य विरुद्धमपि युक्तिवलादापाद्यमानं न विरोधमात्राद्बिभेतीति चेत् । सत्यम् । तदप्यसमवायि भवत्येव किंतु साधारणम् । इह चासाधारणासमवायिकारणत्वपुरस्कारेण विभाग इति न संकरः ॥

**भावनासाधारणकारणकमिति** । नन्वत्र न भावनामात्रजन्यत्वं तत्त्वमभिमतमप्रसिद्धेः । इन्द्रियासहकृतभावनाजन्यत्वमित्यपि न । मनसापीन्द्रियेण स्मृतिजननात् । नापीन्द्रियत्वावच्छिन्नकारणत्वासमवहितभावनाजन्यत्वम् । प्रत्यभिज्ञानेऽपीन्द्रियत्वेन कारणत्वाभावादतिव्याप्तेः । न च तदभावेऽसाक्षात्कारत्वापत्तिः । इन्द्रियत्वस्य साक्षात्कारकारणतागर्भत्वेन साक्षात्त्वावच्छिन्नकार्ये इन्द्रियत्वेनाकारणत्वादिति चेत् । अत्राहुः । अनुभवसामग्र्यसहकृतभावनाजन्यत्वं लक्षणार्थः । न हि स घट इति ज्ञानकाले तदनुभवसामग्री तत्सन्निकर्षघटितास्ति । संस्कारश्च न तत्र सन्निकर्षः । घटं साक्षात्करोमीत्यनुव्यवसायाभावेन तस्य तथात्वकल्पने मानाभावात् । प्रत्यभिज्ञाने च तथानुव्यवसायसद्भावेन तस्य तथात्वकल्पनादिति ॥ **तत्त्वानुभव इति** । यदनवच्छेदेन यो यत्र यत्संवन्धस्तदनवच्छेदेन तत्संवन्धपुरस्कारेण तत्र विशेष्ये तत्प्रकारकोऽनुभव इत्यर्थः । अत्र च मूलानवच्छेदेन कपिसंयोगवद्वृक्षविशेष्यके मूले वृक्षः कपिसंयोगीति भ्रमेऽतिव्याप्तिनिरासाय यदनवच्छेदेन तदनवच्छेदेनेति । कपिसंयोगवद्वृक्षनिष्ठकपिसंयोगानवच्छेदकमूलानवच्छेदेन कप्यसंयुक्तवृक्षविशेष्यके कपिसंयोगभ्रमेऽतिव्याप्तिनिरासाय यत्र तत्रेति । विषयतया ज्ञानसंवन्धिनि घटे समवायपुरस्कारेण ज्ञानवत्ताभ्रमेऽतिव्याप्तिवारणाय यः संवन्धस्तत्संवन्धपुरस्कारेणेति । किंचिद्विशेषणसंवद्धविशेष्यकासंवद्धविशेषणकभ्रमव्यावृत्त्यै यत्संवन्धस्तत्प्रकारक-

---

१ आदित्यपरिवर्तनोत्पाद्ये A. C.; sing. instead of dual B. D. F. K. N. H. २ आदित्यादिसंयोगानु° B. ३ संस्कारासाधारणकारणं G. ४ स्मृतिव्यतिरिक्तं E. K.; अस्मृतिज्ञानं N. ५ अतत्त्वज्ञानं N. A. B. E. F. G. H. N. ६ तत्संयोगयोगजन्यत्वात् P3.

**॥ १४० ॥ अनवधारणं ज्ञानं संशयः ॥ अवधारणरूपातत्त्वज्ञानं विपर्ययः ॥ १४१ ॥ अज्ञायमानकरणजन्यस्तत्त्वानुभवः प्रत्यक्षप्रमा ॥ १४२ ॥ ज्ञायमानकरणजन्यस्तत्त्वानुभवोऽनुमितिप्रमा ॥ १४३ ॥ प्रमायोग[1]व्यवच्छिन्नं प्रमाणम् ॥१४४॥**

---

इति। स्मृतिं निरसितुमनुभव इति संक्षेपः। किंत्वेवं प्रागुक्तो निर्विकल्पकस्य प्रमान्तर्भावोऽपि विरुध्येत। तस्य निःप्रकारकत्वात्। तस्माद्विशेष्यतावच्छेदकधर्मावच्छिन्नात्यन्ताभावप्रतियोग्यप्रकारकोऽनुभव इति ग्रन्थकर्तुर्लक्षणमभिमतम् ॥

**अतत्त्वानुभव** इति। यदवच्छिन्ने यत्र येन संबन्धेन यन्नास्तितदवच्छिन्ने तत्र तेन संबन्धेन तत्प्रकारकोऽनुभवो भ्रम इत्यर्थः। वृक्षः कपिसंयोगीति प्रमां व्यावर्तयितुं यदवच्छिन्ने तदवच्छिन्न इति। न चात्र वृक्षत्वं संयोगनास्तितावच्छेदकं किंतु मूलादि। तदवच्छिन्नतद्विशेष्यका च तत्प्रतीतिर्भ्रम एवेति नातिव्याप्तिः। घटस्य ज्ञानमित्यादिप्रमां व्यवच्छेत्तुं येन संबन्धेन तेन संबन्धे[2]नेति। संबद्धप्रकारकप्रतीतिं व्यावर्तयितुं यन्नास्ति तत्प्रकारक इति। **अनवधारणमिति**। अवधारणत्वरहितमित्यर्थः। तेन व्याप्यवृत्तेरन्योन्याभावस्यालक्षणार्थत्वान्न कश्चिद्दोषः। एकस्यापि ज्ञानांशभेदेन संशयत्वनिश्चयत्वयोरविरोधः। विपर्ययलक्षणे संशयसत्यज्ञाननिवृत्त्यै क्रमेण विशेषणे ॥ **अज्ञायमानकरणेति**। नञः समस्तेन पदेनान्वयान्नेश्वरप्रमायामव्याप्तिः। नन्वनुमितावति[3]व्याप्तिः। अज्ञायमानलिङ्गज्ञानकरणत्वात्। न च लिङ्गकरणतापक्षाश्रयणाददोषः। तच्च व्याप्तिपक्षधर्मताविशिष्टलिङ्गज्ञानमित्युत्तरग्रन्थविरोधादिति चेन्न। सविशेषणे हीति न्यायेन ज्ञानकरणाजन्यत्वस्यैव विवक्षितत्वात्। तस्यापि च निःकृष्यमाणस्यानुभवत्वसाक्षाद्व्याप्यज्ञानकरणप्रयोज्यजातिशू[4]न्यतत्त्वज्ञानत्वे पर्यवसानात् न मननादिकरणके साक्षात्कारादावव्याप्तिः ॥

**ज्ञायमानकरणेति**। अनुभवत्वसाक्षाद्व्याप्यज्ञानकरणप्रयोज्यजातिमत्तत्त्वज्ञानमित्यर्थः। तेन न मननविशेषदर्शनादिप्रयोज्यजातिविशेषवतोरात्मसाक्षात्कारसंशयोत्तरप्रत्यक्षयोरतिव्याप्तिः। प्रसङ्गात्प्रमाणल[5]क्षणमाह। **प्रमायोगव्यवच्छिन्नमिति**। प्रमासंबन्धमात्रं विषयादिसाधारणमित्ययोगव्यवच्छिन्नमिति। व्याप्तमित्यर्थः। नन्वीश्वरप्रमाव्याप्तत्वात्सर्वत्रातिव्याप्तिः। न च जन्यप्रमा विवक्षिता। तथापि सुखादावतिव्याप्तेः। इन्द्रियलिङ्गपरामर्शयोः प्रमाव्या-

---

१ साधनाश्रययोरन्यतरत्वे सति प्रमायोग° etc. G. Jin. २ संबन्धि° $P_3$. ३ अतिप्रसङ्गः $P_4$. ४ जातिशून्यत्वे $P_2$. ५ प्रमाणलक्षणान्याह $P_1$.

प्रत्यक्षप्रमायोगव्यवच्छिन्नं प्रत्यक्षप्रमाणम् ॥ तच्चेश्वरघ्राणरसनचक्षुःस्पर्शनश्रोत्रमनोलक्षणम् ॥ १४५ ॥

अनुमितिप्रमायोगव्यवच्छिन्नमनुमानम् ॥ तच्च व्याप्तिपक्ष-

---

सत्त्वाभावादव्याप्तेश्च । न च स्वव्यापकप्रमासाधनाश्रययोरन्यतरस्य लक्षणत्वान्नातिव्याप्तिः । इन्द्रियलिङ्गपरामर्शयोश्च प्रामाण्यानभ्युपगमान्नाव्याप्तिरपीति वाच्यम् । तच्चेश्वरघ्राणरसनेत्यग्रिमग्रन्थेन स्फुटमभिहितस्येन्द्रियप्रामाण्यस्य त्यागप्रसङ्गात् । सुखादिव्यावृत्तस्य व्यापारगर्भसाधनत्वस्येन्द्रियसन्निकर्षादौ दुर्वचत्वाच्च । स्वरूपेण प्रमाव्याप्तेः सहकारिसाहित्यावच्छेदेन च तद्व्याप्तेः सकलसाधारण्येन विना विनिगमकमहमेव प्रमाणमिति प्रामाण्ये तेषामन्योन्यमुन्मत्तकेलिप्रसङ्गाच्च । एतेन विशेषलक्षणे व्याख्याते । अत्राहुः । अनुभवत्वसाक्षाद्व्याप्यैकजातीयसकलजन्यमात्रवृत्तिकार्यतानिरूपितकारणताश्रयप्रमाव्यापारकस्वव्यापकज्ञानाश्रयान्यतरत्वं ग्रन्थकृदभिमतं तल्लक्षणम् । अयमस्यार्थः । अनुभवत्वस्य साक्षाद्व्याप्या एका या जातिः साक्षात्त्वं अनुमितित्वं वा तद्वन्ति यावन्ति जन्यानि तेष्वेव वर्तमाना या कार्यता तया निरूपितायाः कारणतायाः आश्रयः प्रमासंबन्धी व्यापारो यस्य तच्च स्वव्यापकस्य ज्ञानस्याश्रयश्च तयोरन्यतरत्वं प्रमाणत्वमिति । अत्र च स्वव्यापकेत्यादिकमीश्वरसंग्रहाय । ततः पूर्वं सर्वं करणप्रामाण्यसंग्रहायेति स्थूलविभागः । तत्रापि ज्ञानाश्रयत्वमस्मदादिसाधारणमिति स्वव्यापकेति । न च यदेश्वरस्तदा तत् ज्ञानमितिवद्यदा वयं तदास्मज्ज्ञानमिति व्यापकतास्मदादिज्ञानस्य यस्य चेश्वज्ञानस्यास्मदादिव्यापकता न तदाश्रयत्वमस्माकमिति नातिव्याप्तिः । सन्निकर्षव्यावृत्त्यै व्यापारेति । शरीरात्मादिव्यावृत्त्यै मात्रेति । असंभवव्यावृत्त्यै जन्येति । आलोकव्यावृत्त्यै सकलेति । कारणमात्रेऽतिप्रसङ्गनिवृत्त्यै अनुभवजातीयेति । असंभवव्यावृत्त्यै व्याप्येति । मननप्रयोज्यजातिमादाय मननव्यावृत्त्यै साक्षादिति । असंभवान्तरव्यावृत्त्यर्थमेकेति । न च साधनाश्रययोः परस्परमव्याप्तिपरिहाराय विशेषणोपादानवैयर्थ्यम् । अखण्डाभावस्यान्यतरत्वस्यैतावता विनाशक्यनिरूपणत्वादिति ॥

**प्रत्यक्षप्रमेति** । जन्यप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयप्रमाव्यापारकस्वव्यापकसाक्षात्काराश्रयान्यतरदित्यर्थः ॥

**अनुमितिप्रमायोगेति** । अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रय-

---

१ साधनाश्रययोः etc. also inserted in the definition of प्रत्यक्षप्रमाण G. २ तच्चेश्वर etc. om. E. K. ३ सकलतद्धेतुसाधारण्येन P₃. P₄. ४ वर्तमानायाः कार्यतानिरूपितायाः P₃. ५ मनन......आदाय om. P₃. ६ प्रमाव्यापक° P₂; प्रमाव्यापारक om. P³.

**धर्मता[1]विशिष्टलिङ्गज्ञानम् ॥ १४६ ॥ व्याप्तिश्च व्यापकस्य व्याप्याधिकरण[2]उपाध्यभावविशिष्टः संबन्धः ॥ १४७ ॥ पक्षधर्मता तु व्याप्यस्य पक्षसंबन्धः ॥ १४८ ॥ व्यापकं साध्यम् ॥**

---

प्रमा[3]व्यापारकत्वमित्यर्थः । अतो नासंभवो न[4] वा शरीरात्मादावतिप्रसङ्गः । व्यापारपदं तर्केऽतिव्याप्तिवारणाय । इन्द्रियकरणतास्वरसेन व्यापारवतः करणत्वसूचनाल्लिङ्गपरामर्शस्य च करणस्य व्यापारान्तरानिरूपणात्तर्कस्यैव तद्व्यापारत्वात् । न च साध्याभावशङ्काया लिङ्गपरामर्शात्मना विशेषदर्शनेनैव निरासादन्तरा तर्कावतारे मानाभावः स्वारसिकसाध्याभावशङ्काया विशेषदर्शनादुच्छेदेऽपि तदप्यभिभूय भवन्त्या विरोधिप्रमाणसदसद्भावशङ्कोत्थापिताया: साध्यविरहशङ्कायास्तेनैवानुच्छेदात् । स्वारसिकार्थनिश्चयेन ज्ञानाप्रामाण्यशङ्काहितार्थसंशयानुच्छेदवत् । अतस्तन्निवृत्तये विषयपरिशोधकतर्कावतारस्यावश्यकत्वात् । तदुक्तमाचार्यैः । "विरोधिप्रमाणसदसद्भावशङ्कायां तु मुहूर्तमनुमितौ विलम्बन्तेऽनुमातार" इति । व्याप्तिज्ञानं तत्समानप्रकारकं पक्षधर्मताज्ञानं चानुमितिहेतुरिति प्राभाकरमतानभिमतिं सूचयितुं तत्स्वरूपमाह ॥ **तच्च व्याप्तिपक्षधर्मताविशिष्टलिङ्गज्ञानमिति** । प्रकृतहेतुगोचरपक्षा[5]वृत्तिव्यभिचारज्ञानविरोधिप्रकारेण *व्याप्तिपक्षधर्मताविषयज्ञानमित्यर्थः* । तेन व्याप्तिपक्षधर्मताविषयत्वमात्राभिधाने प्रमेयत्वादिना तद्विषयकज्ञानेऽतिप्रसङ्गः । तदुभयप्रकारत्वाभिधाने तु विशकलितव्यभिचाराभावसहचारगो[6]चरव्याप्तिज्ञाने व्याप्यधूमादिप्रकारकतया पक्षधर्मत्वाप्रकारके वह्निव्याप्यधूमवानयमित्यादिज्ञाने चा[7]प्रसङ्ग इत्यादि दूषणमलग्नकं द्रष्टव्यम् । अ[8]त्र मनोलिङ्गव्याप्तिज्ञानकरणतानिराकरणमन्यतोऽवगन्तव्यम् ॥ **व्याप्तिश्चेति** । अत्रोपाध्यभावविशिष्टः संबन्ध इति लक्षणम् । इतरत्तन्निरूपकमतो न वैयर्थ्यम् । उपाध्यभावविशिष्टत्वं यावत्स्वव्यभिचारिव्यभिचारि[9]प्रतियोगिकत्वम् । यावत्स्वव्यभिचारिव्यभिचारित्वं तु साध्यस्य यावत्स्वाव्या[10]पकाव्याप्यत्वमेव । संबन्धः सामानाधिकरण्यम् । तेन यावत्स्वव्यभिचारिव्यभिचारिसामानाधिकरण्यं व्याप्तिरित्युक्तं भवति । यावत्पदं सोपाधावतिव्याप्तिवारणाय ॥ **व्याप्यस्य पक्षसंबन्ध** इति । पक्षतावच्छेदकाश्रययावद्व्यक्ति-

---

१ व्याप्तिविशिष्टलिङ्गज्ञानं only. K.; °विशिष्टं लिङ्गज्ञानम् Jin. २ °धिकरणकोपा° A.; °धिकरणोपाध्य° B. C.; स्वव्याप्यासमानाधिकरण etc. (?) D. N. ३ प्रमा om. $P_3$. ४ न वा om. $P_3$. ५ पक्षवृत्तिज्ञान $P_2$. ६ सहचारगोचरस्मरणजव्याप्तिज्ञाने etc. $P_2$.; व्याप्ति om. $P_3$. ७ अतिप्रसङ्गः $P_3$. $P_4$. ८ अत्र मनोलिङ्ग......अन्यतोऽवगन्तव्यम् om. $P_2$. ९ यावत्स्वव्यभिचारिप्रतियोगिकत्वं only. $P_2$. The next clause om. $P_2$. $P_4$. १० स्वव्यापकाव्याप्यत्वमेव $P_3$.

**व्याप्यं लिङ्गम् ॥ १४९ ॥ उपाधिश्च साधनाव्यापकत्वे सति साध्यसमव्याप्तिः ॥ १५० ॥**

**पक्षव्यापकः सपक्षस्पर्शी विपक्षशून्योऽबाधितविषयोऽसत्प्र-**

---

वृत्तिरित्यर्थः । तेन भागासिद्धव्यावृत्तिः । व्याप्यस्येति समभिव्याहारवलल्धानु-वादः । यद्वा पक्षसंवन्धमात्रं भागासिद्धसाधारणमत उक्तं व्यापीति । अस्य पक्षस्य व्यापीति पूर्वं एवार्थो विवक्षितः । भागासिद्धे च न पक्षतावच्छेदकस्य धर्मस्य व्यापी पक्षसंवन्ध इति तद्यवच्छेदः । अत्र च प्रागविवक्षितोऽर्थः शब्दादेव सुलभ इति विशेषः । व्यापीत्याङ्प्रश्लेषादुदासारिण्यः प्रत्यासारिण्य इतिवत्साधुः । व्याप्यव्यापकयोर्लक्षणान्तर्भावमभिप्रेत्य तयोर्व्याप्तिनिरूप्यत्वा-दात्माश्रय इत्याशङ्काह ॥ **व्यापकं साध्यमित्यादिना** । न चैवमपि साध्यत्वं प्रकृतव्याप्तिनिरूपकत्वाल्लिङ्गत्वं च व्याप्तिपक्षधर्मताविशिष्टत्वादन्यद्दुर्वचमित्या-त्माश्रय एवेति वाच्यम् । साध्यलिङ्गशब्दयोस्तत्त्वेनाभिमतपरत्वात् यस्य यदधि-करणे उपाध्यभावविशिष्टः संवन्ध इत्यर्थपर्यवसानात् ॥ **साधनाव्यापकेति** । साधनत्वाभिमतवन्निष्ठात्यन्ताभावप्रतियोगित्वे सति स्वसमानाधिकरणात्यन्ता-भावाप्रतियोगिसाध्यत्वाभिमतसमानाधिकरणात्यन्ताभावाप्रतियोगीत्यर्थः । तेन साध्यत्वसाधनत्वनिर्वचनस्य व्याप्तिगर्भतयाव्यापकत्वसमव्यापकत्वयोरपि तथा-त्वेनात्माश्रय इत्यपास्तम् । न चैवमप्यनाद्यनन्तसंसर्गाभावत्वरूपत्वस्यात्यन्ता-भावत्वस्य नियमघटितहेतुत्वगर्भसंसर्गाभावत्वगर्भतया चक्रकादीति वाच्यम् । संसर्गाभावस्याखण्डोपाधेरेव विवक्षितत्वादित्याहुः । अनित्यत्वसाधने कृतकत्वे सावयवत्वस्योपाधित्वं वारयितुमुत्तरभागः । तत्रापि पक्षेतरत्वेऽतिव्याप्तिं वार-यितुं स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यत्वाभिमतविशेषणम् । कृतकत्वेनानित्यत्वे साध्ये कृतकत्वस्यैवोपाधित्वं वारयितुं पूर्वभागः । अत्रात्यन्ता-भावे प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वं विशेषणं द्रष्टव्यम् । तेन संयोगाद्युपाधिसंग्रहः । स्वगतधर्मासञ्जक एव यौगिकोपाधिपदशक्य इति मतमनु-सृत्येदं द्रष्टव्यम् ॥

**पक्षव्यापक** इति । पक्षतावच्छेदकव्यापक इत्यर्थः । इदं च पर्वतमहानसा-वभिधेयौ पर्वतेतरत्वादित्यादिभागासिद्धकेवलान्वयिनिरासाय । सर्वमभिधेयं प्रमेयत्वादित्यनुपसंहारिनिवृत्त्यै सपक्षस्पर्शीति । अन्वयव्यतिरेकिनिवृत्त्यै विपक्ष-शून्य इति । निश्चितकिंचिद्वृत्त्यत्यन्ताभावाप्रतियोगिसाध्यक इत्यर्थः । तेन नि-श्चितसाध्याभाववच्छून्यत्वं विपक्षशून्यत्वं । तत्र च साध्याभावप्रसिद्ध्यप्रसिद्ध्योस्तद्-

---

१ साधनं for लिङ्गं C. २ उपाधिश्च साध्यसमव्यापकः साधनाव्यापकः N.; °समव्याप्तिकः A.; °समव्याप्तः C. E. F. ३ विपक्षाद्व्यावृत्तः (?) A. ४ व्याप्तिनिरूप्यत्वादात्माश्रयः Ps.

तिपक्षः केवलान्वयी ॥ पक्षव्यापकः सपक्षशून्यो विपक्षाद्व्यावृत्तोऽबाधितविषयोऽसत्प्रतिपक्षः केवलव्यतिरेकी ॥ पक्षव्यापकः सपक्षस्पर्शी विपक्षाद्व्यावृत्तोऽबाधितविषयोऽसत्प्रतिपक्षोऽन्वयव्यतिरेकी ॥ १५१ ॥

संदिग्धसाध्यधर्म[1]वत्त्वेनोपात्तत्वं पक्षत्वम् ॥ १५२ ॥ निश्चितसाध्याधिकरणत्वं सपक्षत्वम् ॥ निश्चितसाध्याभावा[2]धिकरणत्वं विपक्षत्वम् ॥ १५३ ॥

---

च्छून्यत्वं दुर्निरूपमिति दूषणमपास्तम् । उक्तरूपत्रयवति घटो घटभिन्नः प्रमेयत्वादित्यादौ बाधितेऽतिव्याप्तिनिरासार्थमबाधितविषय इति । सत्प्रतिपक्षदशायामत्रैवातिव्याप्तिनिवृत्त्यर्थमसत्प्रतिपक्ष इति । ननु बाधे पक्षस्यैव विपक्षत्वान्न तच्छून्यता हेतोः तदनवतारेण साध्याभावानिश्चयदशायां तु तदभिधानेऽबाधितविषयत्वविशेषणादपि न तद्व्यावृत्तिरित्युभयथानर्थकं तदिति चेत् । सत्यम् । विपक्षत्वस्यापि बाधोपजीवकत्वादावश्यकप्रथमोपस्थितिना बाधेनानुमितिबोधप्रतिबन्धे तदभावस्याप्यनुमित्यनुकूलतामात्रप्रदर्शनायैव तदुपादानं न लक्षणान्तर्गततयेति ॥ **पक्षव्यापकः सपक्षशून्य** इति । पृथिवीतरभेदसाधके चित्ररूपवत्त्वादिव्यतिरेकिणि भागासिद्धेऽतिव्याप्तिवारणाय पक्षव्यापक इति । असाधारणानैकान्तिकनिवृत्त्यै सपक्षशून्य इति । पृथिवीतरभेदसाधकगुरुत्वादिव्यभिचारिव्यावृत्त्यर्थं विपक्षाद्व्यावृत्त इति । अबाधितविषयत्वादिकृत्यं पूर्ववत् ॥ **पक्षव्यापकः सपक्षस्पर्शी**ति । परमाणवोऽनित्याः कृतकत्वादित्यादिव्यावृत्त्यै भागासिद्धव्यावृत्त्यै च पक्षव्यापक इति । केवलव्यतिरेकिव्यावृत्त्यै सपक्षस्पर्शीति । केवलान्वयिव्यावृत्त्यै विपक्षाद्व्यावृत्त इति । शेषं पूर्ववत् । अन्ये तु केवलान्वयसहचारनिश्चयावसेयव्याप्तिकः केवलान्वयी । केवलव्यतिरेकसहचारनिश्चयावसेयव्याप्तिकः केवलव्यतिरेकी । उभयसहचारनिश्चयावसेयव्याप्तिकोऽन्वयव्यतिरेकी । धूमगन्धवत्त्वादयो दशाविशेषेऽन्वयिनो व्यतिरेकिणोऽन्वयव्यतिरेकिणश्चेत्याहुः ॥

**संदिग्धेति** । स्वविशेष्यकसाध्यकोटिकसंदेहयोग्यत्वं संदिग्धसाध्यत्वम् । पृथिवीत्वजलत्वकोटिकद्रव्यत्व[3]विषयकसंदेहयोग्यतया तैलस्य द्रव्यत्वानुमाने सिद्धसाधनेऽपि पक्षतां वारयितुं साध्येति । द्रव्यत्वेतरसत्तावान्तरजात्यधिकरणताको-

---

1. धर्म om. A. B. E. F.; °साध्यत्वेनो etc. G. N. K. 2 °साध्यानधिकरणत्वं A. B. C. D. F. G. H. K. N. 3 द्रव्यत्वविषयक om. $P_2$. $P_3$.

स्वार्थत्वमर्थरूपत्वम् । परार्थत्वं शब्दरूपत्वम् ॥ १५४ ॥ शब्दस्याप्यनुमानविषयत्वेनाविनाभावोपजीवकत्वेन वानुमानत्वम् ॥ १५५ ॥

---

टिकद्रव्यत्वविषयकसंदेहयोग्यतामादाय घटो द्रव्यमिति सिद्धसाधने द्रव्यत्वानुमाने घटस्य पक्षतां वारयितुं तत्कोटिकेति । साध्य एवातिव्याप्तिनिरासाय स्वविशेष्यकेति । लिङ्गपरामर्शादिना तन्नाशेऽपक्षतां वारयितुं योग्यत्वमिति । तच्च प्रकृतसंशयतज्जन्यानुमित्यन्तरालकालावच्छिन्नत्वमिति न योग्यताया यावद्वस्तुभावित्वेन पूर्वोत्तरकालयोरतिप्रसङ्गः । इदमेव च योग्यत्वं मौलिकतृतीयादर्शितोपलक्षणभावसाध्यसंदेहोपलक्ष्यतावच्छेदकं द्रष्टव्यम् । न चाप्रसिद्धसाध्यके व्यतिरेकिणि साध्यकोटिकसंशयाप्रसिद्ध्या तत्पक्षेऽव्याप्तिः । सामान्यतो दृष्टेन मनसा वा तत्र साध्यप्रसिद्धेः पक्षस्याङ्गीकारात् । इदं च कथोपयोग्यनुमानपक्षनिर्वचनमेव न साधारणमिति सिषाधयिषया साधकप्रमाणाभावाद्वा पक्षतायां नातिव्याप्तिः । अत एव कथाङ्गस्यानुमानस्योच्चारणाव्यभिचारादनुच्चारिते पक्षतुल्येऽतिव्याप्तिं परिहर्तुं तदर्थकमुपात्तपदमाह । वस्तुतस्तु तदनर्थकमेव । स्वविशेष्यकसंदेहविषयत्वेन तस्यापि पक्षत्वादन्यदा चाप्रसङ्गादिति ॥

**अर्थरूपत्वं** शब्दाप्रयोज्यपरामर्शविषयत्वम् । **शब्दरूपत्वं** शब्दप्रयोज्यपरामर्शविषयत्वं परमार्थतो द्रष्टव्यम् । वह्निव्याप्यधूमवानयमित्याप्तवाक्योत्थपरामर्शोऽपि परार्थ एव । तत्रापि प्रतिज्ञाद्यङ्गपञ्चकनियमस्य वादिवाक्यविषयत्वात् । ननु शब्दप्रमाणस्य पृथग्विभागलक्षणयोरनभिधाने को हेतुस्तत्राह । **शब्दस्येति** । अनुमानस्य विषय उद्देश्यं जन्यं परोक्षज्ञानं तदेव विषयो जन्यं यस्येति मध्यमपदलोपिबहुव्रीहिणा परोक्षज्ञानजनकत्वं हेतूक्तम् । तेन तस्यानुमानत्वसाधनात्पृथक्तदनभिधानमित्यर्थः । प्रसाध्याङ्गकं हेत्वन्तरमाह । **अविनाभावोपजीवकत्वेनेति** । प्रमाणान्तरत्वकल्पने गौरवादविनाभावोपजीवकत्वस्य कल्पनेत्यर्थः । कथं तदिति चेदित्थम् । एतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि । आकाङ्क्षादिमत्पदकदम्बकत्वात् । यदुक्तसाधनं तदुक्तसाध्यम् । यथा स्वोच्चारितपदजातमिति केचित् । तन्न । लिङ्गकरणतापक्षमाश्रित्याप्यभिधाने पदकदम्बकत्वमेवानुमानं स्यान्न पक्षीकृतानि पदानि । अविनाभावज्ञानसहकारित्वं च पक्षतादिष्वनैकान्तिकम् ।

---

१ स्वार्थं A. B. C. F. G. H. स्वार्थं स्वप्रतिपत्तिरूपत्वम् K. २ परार्थं A. B. C. F. G. H.; पराथ शब्दार्थरूपत्वम् K.; ३ च for वा G. N. ४ तन्नाशे पक्षतां $P_2$. $P_3$. ५ अतिव्याप्तिः $P_3$. ६ अव्याप्तिः $P_3$ ७ अन्यथा च $P_2$. ८ कथाविषयत्वात् $P_2$; वादि om. $P_3$. ९ अत्र for तत्र $P_1$; तत्र $P_3$. $P_4$. १० अविनाभावज्ञानस्य पदसहकारित्वं च $P_2$. $P_3$.

तत्र साध्यवत्त्वेन[1] पक्षवचनं प्रतिज्ञा। लिङ्गस्य पक्षधर्म-

---

किं चास्य ग्रन्थस्य प्रमाणाधिक्याशङ्कानिराकरणार्थत्वे विभागान्त एवान्तर्भावा-भिधानं स्यात्। मध्यत्वलघुत्वाद्यन्तर्भावाभिधानवत्। प्रकृतप्रतिज्ञाद्यनुमानपरि-करनिरूपणान्ते वा। न पुनर्मध्य एवेत्यन्यथा व्याख्येयम्। तद्यथा। शब्दप्रयो-ज्यलिङ्गपरामर्शात्मनः परार्थानुमानस्य[2] कुतः शब्दरूपत्वमित्याशङ्क्य प्रयोजक-तयोपचारेण प्रसिद्धानुमानभावस्य शब्दस्य यथाश्रुतमपि सुवचमिदं लक्षण-मिति मन्वानः शब्दस्यानुमानोपचारत्वे बीजमाह। **शब्दस्यापीति**। अनु-मानविषयत्वं लिङ्गपरामर्शप्रयोजकत्वमनुमितिप्रयोजकत्वं वा। अविनाभावो-पजीवकत्वं तु व्याप्त्युपजीवकत्वं लिङ्गपरामर्शस्याप्यनुमित्यनुकूलत्वे[3] विषयीभूता-विनाभावोपजीवकत्वात्। शब्दस्यापि व्याप्तिं प्रतिपाद्य तत्र[4] जिज्ञासोत्थापनेन मानसपरामर्शजननद्वारानुमित्युपयोगिनोऽविनाभावोपजीवकत्वाविशेषादिति॥

**साध्यवत्त्वेनेति**। निगमनावयवत्वे सति प्रकृतव्याप्त्यगोचरानुमित्सित-संसर्गबोधजनकं वाक्यमित्यर्थः। निगमनोत्तरभागव्यावृत्त्यै पूर्वविशेषणम्। न्यायनिगमनव्यावृत्त्यै व्याप्त्यगोचरेति बोधविशेषणम्। व्याप्तिपक्षकानुमान-प्रतिज्ञायामव्याप्तिवारणाय प्रकृतेति। हेत्ववयवव्यावृत्त्यर्थमनुमित्सितसंसर्गेति। पक्षतावच्छेदकावच्छेदेन साध्यसंसर्गविशेषोऽनुमित्सितसंसर्गः। तत्परित्यागेन पक्षसाध्यसंसर्गपदोपादाने संख्याज्ञानं संख्यावदित्यादिप्रतिज्ञापूर्वभागेऽव्याप्ति-रित्यनुमित्सितपदम्। संख्याया ज्ञानमिति षष्ठ्यर्थो विषयविषयिभावसंबन्धश्च नानुमित्सितः किं तु समवाय इति न दोषः। न च शब्दोऽभिधेयवानित्यादि-प्रतिज्ञायामभिधेयत्वेन प्रकृतव्याप्तिं गोचरयन्त्यामव्याप्तिः। व्यभिचारिज्ञानवि-रोधिप्रकारेण तद्विषयत्वस्यैव[5] तद्गोचरपदार्थत्वात्। उदाहरण-जन्यज्ञानस्य तु व्याप्तिविषयत्वेन तत्प्रकारकत्वमवश्यं संपादनीयमतो नाति-व्याप्तिः। न च पदान्तरसाचिव्यादनुमित्सितसाध्यसंसर्गबोधके प्रतिज्ञावयवेऽति-व्याप्तिः। वाक्यस्य पदसमुदायत्वेन[6] यावद्भिः पदैरनुमित्सितसंसर्गबोधस्ताव-त्पदसमुदायः प्रतिज्ञेत्यर्थलाभाददोषात्॥ **लिङ्गस्य पक्षधर्मत्ववचनमिति**। साध्यस्य पक्षधर्मतावचने प्रतिज्ञायामतिव्याप्तिवारणाय लिङ्गस्येति। ननु धूम-वान्पर्वत इति प्रतिज्ञैकदेशे उपनये निगमनपूर्वभागे न्याये चातिव्याप्तिरिति चेन्न। प्रकृतव्याप्त्यैर्विषयहेतुविभक्त्यर्थान्वितलिङ्गपक्षसंबन्धबोधजनकं वाक्यमिति विव-क्षितत्वात्। अत्र च निगमनपूर्वभागव्यावृत्त्यै व्याप्त्यविषयेति[8] बोधविशेषणम्। इदमेतदनुमितिजनकमेतद्व्याप्तत्वादित्यादिहेत्वव्याप्तिनिरासाय प्रकृतेति। धूमवा-

---

[1] साध्यवत्त्वेन om. in many Mss. A. $P_1$. $P_2$.; प्रतिपिपादयिषया after तत्र G. [2] परार्थानुमानस्य om. $P_2$. [3] अनुकूले $P_1$. [4] तत्त्व° $P_2$. [5] °विषयत्वे तत्रातत्स° $P_1$. [6] °समुदायपरत्वेन $P_1$. [7] प्रकृतव्याप्तविषय° $P_2$. [8] व्याप्तविषयेति $P_2$.

[1]त्ववचनं हेतुः ॥ दृष्टान्तवचनमुदाहरणम्[2] ॥ परा[3]मर्शत्ववचनमुपनयः ॥ लिङ्गसंबन्धप्रयुक्तनिश्चितसाध्यव[4]त्त्ववचनं निगमनम् ॥ १५६ ॥

अङ्गवैकल्यमाभासत्वम्[5] ॥ १५७ ॥ लिङ्गत्वेना[6]निश्चितत्व-

---

न्पर्वत इति प्रतिज्ञैकदेशव्यावृत्त्यै हेतुविभक्त्यर्थान्वितेति । पर्वतो वह्निमान्महानसे धूमादित्याद्यसद्धेतुनिरासाय पक्षसंबन्धेति । व्याप्तिपक्षधर्मतयोरनुमितिप्रयोजकतातौल्येन[7] तदाकाङ्क्षयोः पौर्वापर्यनियमे मानाभावेन मतुवादिप्रयोगौचित्यादप्रयोगेऽपि वा[8] पक्षसमभिव्याहृतं हेतुवाक्यं तद्धर्मतयैव तमुपस्थापयति । अवयवासाधकतानुमानवदिति[9] भावः ॥ दृष्टान्तवचनमिति । यद्वाक्यत्वावच्छेदेनापेक्षितसं[10]व्याप्तिकं दृष्टान्ताभिधानं तदित्यर्थः । अनुपदर्शितव्याप्तिकव्यावृत्त्यर्थं सव्याप्तिकेति । विपर्ययस्तोपदर्शितव्याप्तिकव्यावृत्तयेऽपेक्षितेति । यत्र धूमस्तत्राग्निरित्येवोक्ते कुत्रेदं दृष्टमिति पर्याकुलितमना न तावद्व्याप्तिं प्रत्येति यावन्न दृष्टान्तोपन्यास इति तदभिधानावश्यकतापक्षे तद्रहितोदाहरणभागव्यावृत्त्यर्थं दृष्टान्तवचनमिति । न्यायमहावाक्यव्यावृ[11]त्त्यर्थं यद्वाक्यतावच्छेदेनेति । लिङ्गपरामर्शवचनमिति । हेतुविभक्त्यर्थान्वयाविषयप्रकृतव्याप्यवत्ताप्रकारकपक्षज्ञानजनकं वाक्यमित्यर्थः । प्रतिज्ञाव्यावृत्त्यर्थं व्याप्यवत्ताप्रकारकेति । पर्वतो वह्निव्याप्यधूमवानिति प्रतिज्ञाव्यावृत्त्यै प्रकृतेति । न्यायनिगमनैकवाक्यव्यवच्छेदाय हेतुविभक्त्यर्थान्वयाविषयेति ॥ लिङ्गसंबन्धप्रयुक्तेति । हेतूपरागबलेन पक्षे साध्यनिश्चायकत्वं यदवच्छेदेन तद्वाक्यत्वमित्यर्थः । न्यायवाक्यव्यवच्छित्त्यै यदवच्छेदेनेति । न्यायवाक्यत्वं चाधिकवृत्तित्वान्न तदवच्छेदकमिति नातिव्याप्तिः । प्रतिज्ञाव्यावृत्त्यै हेतूपरागबलेनेति ॥

अङ्गवैकल्यमिति । स्वापेक्षिताङ्गवैकल्यमित्यर्थः । तेन सत्केवलान्वयिकेवलव्यतिरेकिणोश्चतुरङ्गयोर्नातिव्याप्तिः ॥ लिङ्गत्वेनानिश्चितत्वमिति । व्याप्तिविशिष्टपक्षधर्मत्वेनाप्रमितत्वमित्यर्थः । अयं च विशिष्टव्यतिरेको व्याप्यत्वासिद्धे आश्रयासिद्धे स्वरूपासिद्धे ज्ञानासिद्धे चोत्तरोत्तरविशेषणव्यतिरेक-

---

१ पक्षधर्मवत्त्वज्ञापकवचनं A.; लिङ्गस्य पक्षवचनं B.; लिङ्गस्य वचनं only E. २ सव्याप्तिकं before दृष्टान्तवचनं C.; सम्यग्दृष्टान्तवचनं G. ३ लिङ्गपरामर्शवचनमुपनयः $P_1$. $P_2$. H.; लिङ्गस्य पक्षधर्मत्ववचनमुपनयः E.; परामर्शत्वज्ञापकं वचनमुपनयः G. ४ साध्यत्ववचनं D. E. F. N. H. K.; साध्यवचनं G.; लिङ्गसंबन्धेन......साध्यत्व...C. ५ आभासहेतुत्वम् Jin. ६ पक्षधर्मत्वेनेति पाठान्तरं । लिङ्गत्वेनानिश्चितत्वं असिद्धत्वम् A.; पक्षधर्मत्वेन Mita. Jin. L. H. ७ तौल्येऽपि न (?) $P_1$. ८ बाधक for वा पक्ष $P_4$. ९ द्व्यवयवा॰ etc. $P_2$. $P_3$. $P_4$. १० सापेक्षितव्याप्तिकं $P_3$. $P_4$. ११ दृष्टान्त......वाक्यव्यावृत्त्यर्थं om. $P_4$.

मसिद्धत्वम् ॥ १५८ ॥ पक्षविपक्षमात्र[1]स्पर्शित्वं विरुद्धत्वम् ॥ १५९ ॥ पक्षत्रय[2]वृत्तित्वमनैकान्तिकत्वम् ॥ १६० ॥ साध्यासाधकत्वे[3] सति पक्षमात्रवृत्तित्वमनध्यवसितत्वम् ॥ १६१ ॥ उपजीव्यप्रमाणनिश्चितसाध्यविपरीतत्वं[4] कालात्ययापदिष्टत्वम् ॥ १६२ ॥ यस्य[5] हेतोः साध्यविपरीतसाधकं हेत्वन्तरं

---

प्रयुक्ततयाविशिष्ट[6] इति न काप्यव्याप्तिः। यदा तु पक्षधर्मत्वेनानिश्चितत्वमिति वा पाठस्तदा सोपाधिव्याप्यत्वासिद्धो व्यभिचारिणि साध्याप्रसिध्द्या सहचारशून्यस्तु तत्प्रसिद्धिमूलकसंदेहघटितपक्षताविरहादाश्रयासिद्धे सामग्रीवैकल्यमात्रे वा तदभावमात्रसहचारस्तु विरुद्ध इति न तत्[7]संग्रहोपयोग इति हृदयम् । विरुद्धलक्षणे व्यभिचारिव्यावृत्त्यै मात्रेति । अव्याप्तिनिवृत्त्यै पक्षेति । न च सोऽपि विपक्ष एव साध्याभावानिश्चयात् । अनध्यवसितव्यावृत्त्यै विपक्षेति । यद्यप्यसाधकतानुमाने विपक्षवृत्त्यतिरिक्तविशेषणानर्थक्यं तथापि दूषकताबीजभेदावाप्तभेदानाममीषामसंकीर्णत्वोपलक्षणरूपमात्रमत्राभिधीयत इति न विशेषणान्तरवैयर्थ्यम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥ साध्यासाधक इति ॥ सत्केवलव्यतिरेकिव्यावृत्त्यै साध्यासाधकेति । विरुद्धानैकान्तिकव्यवच्छित्त्यै मात्रेति । न चासाधकतयैवानध्यवसितनिर्वचने असाधकतानुमाने साध्यावैशिष्ट्यम् । साध्यासाधकपदेन सत्सपक्षताया एव विवक्षितत्वात् । स एव हि पक्षमात्रवृत्तिः साध्यासाधको यः सत्सपक्षः तस्यैव साध्यसंदेहापादनसामर्थ्यनिर्वाहादिति द्रष्टव्यम् ॥ उपजीव्येति । उपजीव्यत्वमधिकबलत्वम् । तच्च न लक्षणान्तर्गतमुपजीवकोदासीनयोर्बाध्यसंशायकयोर्विपरीताप्रमापकत्वादेव व्यावृत्तेः किंतु विपरीतप्रमापकतासामर्थ्योपदर्शनाय । संदिग्धसाध्यविपरीतसत्प्रतिपक्षव्यवच्छेदाय निश्चितेति । आभासत्वास्फूर्तिदशायामाभासनिश्चितसाध्यविपरीतसदनुमानव्यावृत्त्यै प्रमाणेति ॥ साध्यविपरीतेति। साध्याभावसाधनस्वरूपयोग्यपरामर्शविषयः प्रकृतसा-

---

1 मात्र om. E. 2 पक्षत्रयस्पर्शित्वं F.; °वृत्तिरनैकान्तिकः E.; पक्षत्रय etc. om. N. 3 The same followed by 'साध्यतदभावसाध्यत्वं संदिग्धत्वम्' C.; साध्यतदभावसाध्यत्वमनध्यवसितत्वम् E.; साध्यतदभावसाध्यत्वं सन्दिग्धत्वम् instead. B. L.G.; the same with साधारणत्वम् for साध्यत्वम् N.; साध्यासाधकः पक्ष एव वर्तमानो हेतुरनध्यवसितः। साध्यतदभावसाधकत्वं सन्दिग्धत्वम् F.; the same with स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः after अनध्यवसितः; K. & D. which has, however, साधारणत्वं for साधकत्वं. 4 विपरीतसाधकत्वम् E. 5 साध्यतदभावसाधकत्वं प्रकरणसमत्वम् A.; स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः C.; तुल्यबलाङ्कत्वं प्रकरणसमत्वम् G.; उभयत्र त्रिरूपत्वं प्रकरणसमत्वम् H.; om. N.E.; for readings of Mita. and Jin. see notes. 6 प्रविष्ट $P_4$. 7 मत for न तत् $P_4$.

विद्यते स प्रकरणसमः ॥ १६३ ॥

अनिष्टव्यापकप्रसञ्जनं तर्कः ॥ तुल्यत्वेनाभावयोः प्रत्यभाववचनं प्रसञ्जनम् ॥ १६४ ॥ निद्रादुष्टान्तःकरणजं ज्ञानं स्वप्नः ॥ योगजधर्माननुगृहीतस्य मनसो निरिन्द्रियप्रदेशावस्थानं निद्रा ॥ १६५ ॥ वस्तुस्वरूपमात्रग्रहणं निर्विकल्पकम् । विशिष्टस्य[2] ग्रहणं सविकल्पकम् ॥ १६६ ॥ अतीतावै[3]-

---

ध्यसाधकपरामर्शविषयाद्धेतोरन्यो हेतुः प्रकरणसम इत्यर्थः । एकत्र पक्षे विपरीतसाधकहेत्वन्तरपरामर्शसमानकालीनसमानाधिकरणसाध्यसाधकपरामर्शविषयो हेतुरिति तात्पर्यार्थः । अत्र च नित्यत्वानित्यत्वव्याप्यविभुत्वकृतकत्ववन्तौ नभःकुम्भाविति परामर्शविषययोर्विभुत्वकृतकत्वयोर्व्यवच्छित्त्यै एकत्र पक्ष इति । आलोकविशेषव्याप्यवह्नितद्व्याप्यै[4]र्धूमवान्पर्वत इति समूहालम्बनपरामर्शविषययोर्वह्निधूमयोर्व्यावृत्त्यै विपरीतेति । अनध्यवसितव्यावृत्त्यै हेत्वन्तरेति । एकमात्रपरामर्शविषयहेत्वन्तरव्यावृत्त्यै साध्येति ॥

अनिष्टेति । अनिष्टस्य वह्न्यभावव्यापकस्य धूमाभावादेः प्रसञ्जनं तर्क इत्यर्थः । जलह्रदे निर्धूमत्वापादनव्यावृत्त्यर्थमनिष्टेति । शब्दो यद्यनित्यः स्यात्सावयवः स्यादित्यादिव्युदासाय व्यापकेति । प्रसञ्जनपदार्थमाह । तुल्यत्वेनेति । देशतः कालतो वा तुल्यावस्थानत्वेन व्याप्यव्यापकभावेनेति यावत् । अभावयोरित्युपलक्षणमापाद्यापादकयोः । प्रत्यभाववचनं प्रतिकूलापाद्यवचनम् । अत्र च तुल्यत्वेनेति प्रतीतिश्च पूर्वलक्षणान्तर्गतव्यापकतानिष्टत्वयोरनुवादः । तेन व्यापकतानिष्टत्वयोः प्रसञ्जनपदार्थान्तर्भावे तर्कलक्षणे तदुभयवैयर्थ्यमिति दूषणमपास्तम् । न च शब्दोऽनित्यः कृतकत्वादिति कृतकत्वव्यापकस्य मीमांसकं प्रत्यनिष्टस्यानित्यत्वस्यापादनेऽतिप्रसङ्गः । वचने[5]शब्देनाहार्यारोपस्य तर्हि निर्धूमः स्यादित्याकारस्य विवक्षितत्वात् ॥ निद्रादुष्टेति । अत्र च वक्ष्यमाणलक्षणया निद्रया जन्यं ज्ञानमिति लक्षणांशः । इतरत्स्वरूपकीर्तनम् ॥ योगजेति । समाधावतिव्याप्तिनिरासाय योगजेत्यादि । निरिन्द्रियप्रदेशः स्वप्नवहनाडीत्याहुः ॥ वस्तुस्वरूपमात्रग्रहणमिति । न चावस्तुस्वरूपग्रहणाप्रसिद्ध्या मात्रपदवैयर्थ्यम् । निष्प्रकारकज्ञानत्वस्य विवक्षितत्वात् ॥ विशिष्टग्रहणमिति । सप्र-

---

१ ˚मात्रावभासकं A. B. F. २ विशिष्टग्रहणं $P_1$. $P_2$. H. K. N. ३ अतीतवर्तमानावस्थावच्छिन्न˚ A.; अतीतावस्थावच्छिन्न˚ B. C. E. F. D. N. ४ वह्नितद्व्याप्य om. $P_4$. ५ प्रसञ्जन for वचन $P_2$.

च्छिन्नवस्तुग्रहणं प्रत्यभिज्ञानम् । दुःख[1]साधनज्ञानं हानम् । सुखसाध[2]नज्ञानमुपादानम् । उभयासाध[3]नज्ञानमुपेक्षा ॥१६७॥ उत्कटै[4]ककोटिकः संशय ऊहः । अनालिं[5]ङ्गितोभयकोट्यनवधारणज्ञानमनध्यवसायः ॥ १६८ ॥

प्रयत्नोत्पाद्यसाधनाधीनं सुखं सांसारिकम् ॥ इच्छा[6]मात्राधीनसाधनसाध्यं सुखं स्वर्गः[7] ॥ १६९ ॥ सांसिद्धिकत्वं तेजःसंयोगानुत्पाद्यत्वं । तेजःसंयोगोत्पाद्यत्वं नैमित्तिकत्वम् ॥१७०॥ कर्मजः संस्कारो वेगः । ज्ञानजः संस्कारो भावना । स्थि[8]त्यापादको गुणः संस्कारः स्थितिस्थापकः ॥ १७१ ॥

---

कारकमित्यर्थः । अतीतावस्थावच्छिन्नस्य वर्तमानभेदावगाहि प्रत्यक्षं प्रत्यभिज्ञानम् ॥ स्वानिष्टसाधनताप्रकारकं ज्ञानं हानम् ॥ स्वेष्टसाधनताप्रकारकं ज्ञानमुपादानम् ॥ उभयाप्रकारकं ज्ञानमुपेक्षा ॥ अनालिङ्गि[9]तेति । न आलिङ्गिते विरोधितावच्छेदकरूपेणोल्लिखिते[10] उभे कोटी येन तादृगनवधारणं ज्ञानमित्यर्थः । तेन किंस्विदेतदिति अनध्यवसाये किंत्वेन सामान्येनोभयकोट्युल्लेख आवश्यकः । अन्यथा संशयत्वानुपपत्तेरित्यपास्तम् । ऊहव्यावृत्त्यर्थमुभयेति । निश्चयव्यावृत्त्यर्थमनवधारणमिति । ऊहलक्षणं च स्पष्टत्वादुपेक्षितम् । तच्च प्रागस्माभिरुक्तमेव ॥

यागस्य स्वर्गसाधारणत्वात्तद्व्यावर्तकमाह । प्रयत्नोत्पाद्येत्यादिना । यत्न[11]जन्यस्रगादिजन्यं सुखं सांसारिकमित्यर्थः । स्वर्गव्यावृत्त्यै पूर्वभागः । स्रगादिव्यावृत्त्यै परभागः । ननु स्वर्गसुखमपि यागादिप्रयत्नसाध्यसाधनाधीनमिति तत्रातिव्याप्तिरिति चेत् । अत्राहुः । समानकालीनानेकावृत्तिजात्या स्वावच्छेदकसजातीयावच्छेद्यप्रयत्नोत्पाद्यं सुखं सांसारिक[12]मिति । वस्तुतो धर्मारब्धदेहावच्छेद्यं सुखमिति लक्षणम् । तेनायत्नजन्यसुहृद्दर्शनादिजन्यसुखे नाव्याप्तिरिति ध्येयम् । इच्छामात्राधीनेति । सांसारिकसुखव्यावृत्त्यर्थमिच्छामात्राधीनेति । यद्यपि स्वर्गस्य

---

१ दुःखसाधनत्व° H. K. N. २ सुखसाधनत्व° H. K. N. ३ उभयासाधनत्व° H. N. ४ नीचैककोटिकः संदेहः A.; this is om. B. C. D. G. K. N.; अनिश्चिवान् (?) परसंभावना ऊहः H. ५ अनुल्लिखित for अनालिङ्गित K. N. ६ इच्छासुत्पाद्य etc. (?) H. ७ स्वर्गस्थं D. F. Jin. ८ स्थित्या°......संस्कार इति लक्षणांतरं ऋजुत्वापादकः संस्कारः स्थितिस्थापकः A.; only ऋजुत्वा° etc. B. E. G. H. K. N. Jin.; गुरुत्वाद्यापादकः etc. C.; स्थित for स्थिति H. N. ९ अनालिङ्गिते $P_2$. १० अनुल्लिखिते $P_2$. ११ प्रत्यक्ष for यत्न $P_4$. १२ After सांसारिकमिति, $P_1$. has 'लक्ष्यत्वाभिमतेन समानकालीनत्वम्। स्वपदेन लक्ष्यत्वाभिमतम् । तथा च तदवच्छेदकं यच्छरीरं तत्साजात्यं तादृशजात्येत्यर्थः ।'.

अव्यापकत्वं स्वाभावसादेश्यम् । तदभावो व्यापकत्वम् ॥ ॥ १७२ ॥

विहितत्वं धर्मोत्पादकत्वम् । निषिद्धत्वमधर्मोत्पादकत्वम् । उभयविपरीतत्वमुदासीनत्वम् ॥ १७३ ॥

निर्बाधकं सामान्यं जातिः ॥ सबाधकं सामान्यमुपाधिः ॥ १७४ ॥

आरोपितनीलरूपोऽभावोऽन्धकारः ॥ १७५ ॥ ज्ञानसंबन्धो ज्ञानविषयत्वम् ॥ १७६ ॥ तत्त्वंज्ञानेन नियमेनाव-

---

प्रयत्नयागादृष्टप्रणालीजन्यत्वेनेदमसंभवि अदृष्टाद्वारकप्रयत्नानधीनसाधनसाध्यत्वं विवक्षितमप्यदृष्टद्वारकचित्रादियत्नोत्पाद्यग्रामपशुपुत्रादिजन्ये सांसारिके सुखेऽतिप्रसक्तं तथापि समानकालीनानेकावृत्तिजात्या स्वावच्छेदकसजातीयावच्छिन्नप्रयत्नानधीनसाधनसाध्यं सुखं स्वर्ग इति लक्षणमित्याहुः । अधर्मानारब्धदेहावच्छेद्यं सुखमिति तु परमार्थः । स्थितस्थापकलक्षणे ऋजुवस्तुनि स्थितस्थापककार्याभिप्रायेणोपात्तमृजुत्वं पूर्वावस्थामात्रोपलक्षणम् । तेन, वेष्टितविवृतस्य कटादेः पुनर्वेष्टनापादके स्थितस्थापके नाव्याप्तिरिति ध्येयम् ॥

**स्वाभावसादेश्यं** स्वप्रतियोगिकात्यन्ताभावसामानाधिकरण्यम् । तेन प्राक्प्रध्वंसाभावसमानाधिकरणे रूपादौ नातिव्याप्तिः ॥

**निर्बाधकमिति** । यत्सामान्यं यत्र साक्षात्संबन्धेन वृत्तौ व्यक्त्यभेदादिबाधकरहितं तत्तत्र जातिः साक्षात्तद्वृत्ति । अन्यत्तत्रोपाधिः परम्परावृत्तीति यावत् । बाधकबलेन साक्षात्संबन्धत्यागे विशिष्टप्रत्यक्षबलेनान्यवृत्तिजातेरेव परम्परया तत्र वृत्तिकल्पनमिति भावः ॥

**आरोपितनीलरूप** इति । आरोपितं नीलरूपं यस्मिन्नालोकाभावे स इत्यर्थः । इदं च तमसो व्यावर्तकमेव न स्वरूपम् । तेनारोपगर्भत्वे तमसश्चाक्षुषत्वानुपपत्तिरित्यपास्तम् । मध्याह्नादिवर्तिनमालोकाभावं व्यवच्छेत्तुमारोपितेत्यादि । तेन यादृशालोकाभावे नीलरूपारोपः स एव तम इत्युक्तं भवति । ज्ञानसंबन्धो ज्ञाततेत्युक्तम् । तत्सर्वज्ञानेष्वात्मनोऽपि ज्ञातत्वप्रसङ्गादयुक्तमित्यत आह । **ज्ञानसंबन्ध** इत्यादि । ज्ञानसंबन्धनिरूपणप्रसङ्गात्प्रमासंबन्धरूपं प्रमेयत्वमपि

---

१ ज्ञानेन नियमेनावच्छेद्यत्वमुपेक्षणीयत्वं before तत्त्वज्ञानेन etc. K., ज्ञातत्वं तु ज्ञानविषयस्य नियमेनावच्छेदकत्वेनोपेक्षणीयत्वं before तत्त्वज्ञानेन etc. [illegible], which however om. तत्त्वज्ञानेन etc. २ तात्पर्यार्थः P3. ३ [illegible] for प्रत्यक्ष P3. ४ संबन्ध om. P1. P2. P3.

च्छेद्यत्वं प्रमेयत्वम् ॥ १७७ ॥ गुणादिषु च संख्याव्यवहारः संख्याप्रत्यासत्तिनिबन्धनः । अत एव संख्याप्रत्यासत्तिनिबन्धनत्वम् ॥ १७८ ॥

कार्योत्पादकत्वं कारणत्वम् । स्वसमवेतकार्योत्पादकत्वं समवायिकारणत्वम् ॥ समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणत्वम् । उभयविपरीतत्वं निमित्तकारणत्वम् ॥ १७९ ॥

इयत्तावच्छिन्नपरिमाणयोगित्वं मूर्तत्वम् । तदभावोऽमूर्तत्वम् ॥ १८० ॥ कार्यायोगव्यवच्छिन्ना सामग्री ॥ १८१ ॥ संज्ञामात्रेण पदार्थानामभिधानमुद्देशः ॥ १८२ ॥

रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्काराः पृथिवीसमवेताः ॥ रूपरसस्पर्श-

---

निरूपयति । तत्त्वज्ञानेति । तत्त्वज्ञानेन प्रमया अवच्छेद्यत्वं विषयीक्रियमाणत्वमित्यर्थं इति केचित् । अन्ये त्वेतद्ग्रन्थानुरोधेनैवमन्यस्यापि पदार्थस्य सत इत्यादिग्रन्थे पदार्थपदस्थाने प्रमेयपदं पठन्तस्तदाकाङ्क्षानिवर्तकत्वेनैतद्ग्रन्थप्रवृत्तिरित्याहुः । संख्याया गुणान्तर्भावे गुणादिषु संख्याव्यवहारानुपपत्तिरित्यत आह । **गुणादिषु चेति** । संख्याप्रत्यासत्तिः संख्यैकार्थाधेयता मुख्य एव किं न स्यादित्यत आह । **अत एवेति** । सर्वनाम्नां बुद्धिस्थपरामर्शकुशलत्वाद् ग्रन्थकर्तुर्बुद्धिस्थं संख्यापदार्थान्तरकल्पनागौरवमिदमोऽर्थः ॥

**कार्योत्पादकत्वमिति** । कार्यं प्रत्यनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वम् । बहुवक्तव्यत्वान्नेदमिह प्रपञ्च्यते ॥

**रूपरसगन्धेति** । यद्यपि द्रवत्ववेगस्थितिस्थापका न सार्वत्रिकास्तथापि तेषां सर्वेषां पृथिवीत्वसामानाधिकरण्यमात्रं तात्पर्यम् । ननु जलसंपृक्ते माषचणकचूर्णादौ चिक्कणतात्मा स्नेहोऽप्यस्ति । न च जलगत एव माषचूर्णादिभिरभिव्यक्तः प्रतीयते घृतेनेव कुङ्कुमगन्ध इति वाच्यम् । विपर्ययस्यापि सुवच-

---

1 For अत एव etc., सामान्यादिषु सत्ताप्रत्यासत्तिनिबन्धनसद्व्यवहारवत् A.; अत एव तत्प्रतीतेरपि तत्प्रत्यासत्तिनिबन्धनत्वं G. H.; अत एव सत्ताप्रत्यासत्तिः सत्त्वं N. 2 असमवायिकारणं D. E. F. G. H. N. 3 °विपरीतं निमित्तकारणं D. F.; उभयविपरीतकारणं निमित्तकारणं G. H. K. N. 4 योगो मूर्तत्वम् F. G. Jin. 5 त एव गन्धवर्जस्नेहयुक्ता अप्समवेताः A. 6 अभिधेयता $P_3$. 7 बहुवक्तव्यत्वात् $P_2$. $P_3$.

संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्व-स्नेहसंस्कारा अप्सु समवेताः ॥ रूपस्पर्शसंख्यापरिमाणपृथ-क्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारास्तेजःसमवेताः ॥ स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा वायुसमवेताः ॥ संख्यापरिमाणपृथक्त्वसंयोगविभागशब्दा आकाशसमवेताः ॥ संख्यापरिमाणपृथक्त्वसंयोगविभागाः कालदिक्समवेताः ॥ संख्यापरिमाणपृथक्त्वसंयोगविभाग-बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावना आत्मसमवेताः ॥ संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा म-नःसमवेताः ॥१८३॥ कर्म मूर्तद्रव्यसमवेतमनित्यमेव॥१८४॥ सामान्यं द्रव्यगुणकर्मसमवेतम् ॥ १८५ ॥ विशेषास्तु नित्य-द्रव्यसमवेताः ॥१८६॥ समवायाभावावसमवेतावेव ॥ १८७॥ द्रव्यं तु कार्यरूपं स्वावयवसमवेतम् ॥ अकार्यं द्रव्यमसमवे-तमेव ॥ १८८ ॥

विनाशस्तु द्रव्यस्य समवाय्यसमवायिकारणविनाशाभ्याम्॥

---

त्वादिति चेत्। उच्यते। पिण्याकचणकचूर्णादौ जले च तदभ्युपगमे तत्समवा-यितावच्छेदकाननुगमप्रसङ्गात्स्नेहोत्कर्षाधायकचणकचूर्णादिनिरपेक्षस्य जलस्यैव तन्निरपेक्षस्येतरस्य संग्रहाजनकत्वेनोभयत्र तत्कल्पने मानाभावाच्च जल एव तत्कल्पनेति परिशेषादितरस्य व्यञ्जकतामात्रं परिकल्प्यत इति। **रूपरसस्पर्शेति।** न च सांसिद्धिकद्रवत्वादेव संग्रहसंभवे किं स्नेहेनेति वाच्यम्। चणकचूर्णादिना जलतद्द्रवत्वयोरुत्कर्षानाधानादन्यस्य च संग्रहहेतोरभावे तदुत्कर्षस्याकस्मिकत्व-प्रसङ्गात्। आलोकादेरद्रवत्वेऽपि सर्वेषाममीषां तेजस्त्वसामानाधिकरण्यमात्रे तात्पर्यम्। **असमवेतमेवेत्यन्तं स्पष्टम्** ॥

**विनाशस्त्विति।** क्वचित्समवायिनाशात् क्वचिदसमवायिनाशात् क्वचिदु-

---

१ स्नेह om. N. २ °प्रयत्नसंस्कारधर्माधर्मा आत्म° C.; संख्यापरिमाणपृथक्त्वसंयोगविभाग-बुद्धीच्छाप्रयत्ना ईश्वरे समवेताः after आत्मसमवेताः A.; the same after मनःसमवेताः C. ३ सत्तासामान्यं K. ४ नित्यमेव after °कर्मसमवेतम् N. ५ नित्या एव after नित्यद्रव्यसमवेताः N. ६ नित्यद्रव्यं for अकार्यं द्रव्यं E.; अकार्यद्रव्यं D. F. N. G. ७ नाशाभ्यान् F. N. K. G.

गुणस्य तु समवाय्यसमवायिनिमित्तकारणविनाशविरोधिगुणेभ्यो[1] विनाशः ॥ कर्मणः समवाय्यसमवायिकारणनाशोत्तरसंयोगाभ्यां[2] विनाशः ॥ प्रागभावस्य प्रतियोग्युत्पादन[3]सामग्रीतः । अन्योन्याभावस्य प्रतियोगिविनाशकारणात् १८९

उत्पत्तिस्तु द्रव्यगुणकर्मणां समवाय्यसमवायिनिमित्त-

---

भाभ्यां चेत्यर्थः । न च व्यभिचारादकारणत्वप्रसङ्गः । निमित्तेतरकारणनाशत्वेन कारणत्वे तदभावात् । यत्तु तथा उभयनाशजन्यद्रव्यनाशे का गतिरित्याक्षिप्य पृथगेव तत्तद्व्यक्त्योः कार्यकारणभावग्रह इति कुसुमाञ्जलिप्रकाशकृतोक्तं तच्चिन्त्यम् । तत्राप्युक्तरूपेणैव कारणत्वसंभवात् । न हि कुलालद्वयकृते दैवान्मिलितदण्डद्वयकृते वा घटे वैजात्यम् । न वा कुलालदण्डान्तरव्यक्त्योरकारणत्वमविनिगमात् । न वा द्वित्वेन कारणत्वं किन्तु कुलालत्वेन दण्डत्वेनैवेति सिद्धान्त इति । **अन्योन्याभावस्य प्रतियोगिविनाशकारणादिति** । अन्योन्याभावत्वं ध्वंसप्रतियोगिवृत्ति ध्वंसेतराव्याप्यवृत्त्यप्रतियोगिकप्रतियोगिसमानाधिकरणाभाववृत्तित्वात्प्रागभावत्ववदित्यनुमानादनित्यत्वसिद्धाविति शेषः । न च तस्यानित्यत्वे विनष्टयोर्घटपटयोरभेदापत्तिरिति । स्वरूपाभावेन स्वरू[4]पैक्यरूपाभेदा[5]पादनानुपपत्तेः । अन्योन्याभावाभावापादने चेष्टापत्तिरिति । न चैकरूपवद्विनाशे तत्प्रतियोगिकसामान्यावच्छिन्नप्रतियोगिकान्योन्याभावविनाशे वायू रूपवान्नवेति संशयानुपपत्तिः तन्नाशे तन्नास्तितानिश्चयादिति वाच्यम् । ग्रन्थकृता तस्याप्यनभ्युपगमात् । नन्वाश्रयनाशादाश्रितकार्यनाशदर्शनादन्योन्याभावस्यापि अधिकरणनाशादेव स युक्तो[6] न प्रतियोगिविनाशकारणात् । किं च प्रागभावनाशस्य प्रतियोगिसामग्रीजन्यत्वे प्रतियोग्यात्मकत्ववदन्योन्याभावनाशस्य प्रतियोगिविनाशसामग्रीजन्यत्वे प्रतियोगिविनाशतादात्म्यापत्तिः तदभिन्नसामग्रीजन्यत्वादिति चेत् । तत्र न तावदाद्यो दोषः तत्राश्रयशब्देन समवाय्यभिधानादन्यथा ध्वंसस्यापि विनाशप्रसङ्गात् । अत्रैव तथात्वशङ्कायाश्च प्रत्यधिकरणमेकप्रतियोगिकान्योन्याभावभेदप्रसङ्गप्रतिहतत्वात् । नापि द्वितीयः । प्रागभावादिभेदेन सामग्र्यभेदासिद्धेः । प्रतियोगिविनाश एव कारणं तस्मादिति वा तदर्थंकरणात् ॥

---

१ °धिरोधिगुणप्रादुर्भावेभ्यः F.; विनाश before विरोधिगुणेभ्यः om. G. A. २ निमित्त before कारण L.; समवायिकारणोत्तरसंयोगाभ्यां only B.; संयोगेभ्यः C.; समवायिकारणविनाशोत्तरसंयोगाभ्यां F. K. N. Jin. ३ प्रतियोग्युत्पादक D. F. G. H. K. N. Jin. ४ स्वरूप om. $P_4$. ५ अभेद om. $P_4$. ६ संयुक्तः $P_3$. $P_4$.

कारणेभ्यः । तत्र समवायिकारणं त्रयाणां द्रव्यमेव । असमवायिकारणं द्रव्यकर्मणोः संयोग एव । गुणस्य त्वसमवायिकारणं क्वचित्समानजातीयं क्वचिदसमानजातीयं गुणान्तरं क्वचित्कर्म । निमित्तकारणं सर्वेषामेवेश्वरेच्छादृष्टादीनि । अन्योन्याभावप्रध्वंसाभावयोस्तु निमित्तादेव केवलादुत्पत्तिः १९०

अपरं तु सकलं शास्त्रं सुबोधमिति ॥ १९१ ॥

वैशिष्ट्यमन्यव्यावृत्तिः ॥ १९२ ॥ समानाधिकरणं व्यावर्तकं विशेषणम् ॥ एकविभक्त्यन्तपदवाच्यत्वं समानाधिकरणत्वम् ॥ १९३ ॥ व्यधिकरणं सद्व्यावर्तकमुपलक्षणम् ॥

---

गुणस्य त्विति । क्वचिदपाकजरूपादौ सजातीयं रूपादि । क्वचित्पाकजरूपादौ विजातीयं संयोगादि । क्वचित्संयोगादौ कर्मेत्यर्थः । सर्वेषामिति । कार्याणामिति शेषः ॥

ननु भावकार्याणामिव अन्योन्याभावध्वंसयोरपि कुतो न समवाय्यसमवायिकारणजन्यत्वम् । असमवेतत्वादिति चेत् न । तत्रापि प्रश्नतौल्यात् । किं च उद्देशलक्षणवत्परीक्षापि कर्तुमुचिता कुतस्त्यक्ता । येचापरे भेदा इत्यादिना सामान्यतो भेदाः प्रतिज्ञातास्तल्लक्षणान्यपि वाच्यानि कुतो नोक्तानि तत्राह । अपरं सकलमिति ॥

ननु विशिष्टं विशेषणविशेष्यतत्संबन्धात्मकमुक्तं तदयुक्तम् । वैशेषिकमते समवायस्यातीन्द्रियतया तद्घटितवैशिष्ट्यस्याप्यतीन्द्रियत्वेन ऐन्द्रियकविकल्पानां विशिष्टविषयताप्रयुक्तसविकल्पकत्वाभावप्रसङ्गादित्याशङ्क्य वैशेषिकमतं वैशिष्ट्यमाह ॥ वैशिष्ट्यमन्यव्यावृत्तिरिति । ननु व्यावृत्तेरेव वैशिष्ट्यपदार्थत्वे तद्धेतुताप्रयुक्तं विशेषणत्वं व्यावर्तकमात्रस्य स्यात् । तथा च विशेषणोपलक्षणविभागानुपपत्तिरित्यत आह । समानाधिकरणमित्यादिना । जटाभिस्तापस इत्यादौ तृतीयोपलक्ष्यमाणोपलक्षणभावे जटादावतिव्याप्तिनिरासाय समानाधिकरणमिति । विशेष्यव्यावृत्त्यै व्यावर्तकमिति । विशेषणलक्षणप्रविष्टतया अन्तरा सामानाधिकरण्यं निरूपयति ॥ एकेति । एकत्वं सारूप्यं । तच्च व्यावर्त्यवाचकपदविभक्त्या । एतल्लक्षणपक्षे जटावान् तापस इति प्रयोगकाले सा पारिभाषिकं

---

१ द्रव्यस्य संयोग एव F. २ ईश्वरादृष्टादि F. H. K. G. N. ३ स्वत एव बोद्धव्यं for सुबोधं. G. N. ४ विशिष्टं Jin.; अन्यतो व्यावृत्तिः N. ५ व्यधिकरणमवच्छेदकमुपलक्षणम् A. B. Jin. F. D. G. H. K. & N. which has व्यवच्छेदक for अवच्छेदक; सत् om. C. ६ तेजःसंयोगादि $P_2$. ७ वैशेषिकाभिमतं $P_2$. $P_3$. $P_4$.

## The books consulted, with their abbreviations as used in this volume.

---

Am.—Amarakos'a.

Bh.—Bhâskarodayâ, a commentary on Nîlakaṇṭhî (see Nîl. below; Nirnaya-sâgara Press.)

Br. Sû.—Brahma-Sûtrâṇi.

B. P.—Bhâshâ-parichchheda of Vis'vanâtha.

G. S.—The Nyâyasûtras of Gautama.

Jin.—The Commentary on Saptapadârthî, by Jinavardhanasûri.

K. P.—Kâvyaprakâs'a.

Mah.—Mahânârâyaṇopanishad.

Mita.—Mitabhâshiṇî, a commentary on Saptapadârthî, by Mâdhava Sarasvatî. (Vizayanagaram Sanskrit Series.)

Mu.—Muktâvalî.

N. K.—Nyâyakandalî of S'rîdhara, a commentary on Pras'astapâdabhâshya. (Vizayanagaram Sanskrit Series.)

N. P.—Nyâyapradîpa, a commentary by Vis'vakarmâ, on Tarkabhâshâ. (A reprint from Paṇḍit, Benares.)

Nîl.—Nîlakaṇṭhî, also called Tarka-dîpikâprakâs'a, a commentary by Nîlakaṇṭha, on the Tarkadîpikâ of Annambhaṭṭa.

P. B.—Pras'astapâda's Bhâshya on the Sûtras of Kaṇâda. (Viz. Sanskrit Series.)

Pad.—Padârthachandrikâ, a commentary by S'eshânanta on Saptapadârthî.

S'an.—S'ankarâchârya.

S. C.—Sidhânta-chandrodayâ, a commentary on Tarkasangraha, by S'rîkṛishṇa Dhûrjaṭi Dîkshita.

S. D.—Sarvadars'anasangraha of Mâdhavâchârya.

S. S.—Sârasangraha, a commentary on Târkikarakshâ, by the author himself. (Paṇḍit, Benares.)

S'v.—S'vetâs'vataropanishad.

Tât.—Tâtparyaṭîkâ by Vâchaspatimis'ra, on Nyâyasûtravârtika. (Viz. Sanskrit Series.)

T. B.—Tarkabhâshâ of Kes'avamis'ra. (Paṇḍit, Benares.)

T. C.—Tatvachintâmaṇi. (Bib. Ind. Calcutta.)

T. D.—Tarkadîpikâ of Annambhaṭṭa.

T. K.—Tarkakaumudî of Laugâkshibhâskara. (Bombay Sanskrit Series.)

T. R.—Târkikarakshâ of Varadarâja. (Paṇḍit, Benares.)

T. S.—Tarkasangraha of Annambhaṭṭa.

Up.—Upaskâra, a commentary by S'ankaramis'ra on Vais'eshika Sûtras. (Bib. Ind. Calcutta.)

V. B.—Vâtsyâyanabhâshya, a commentary on the Sûtras of Gautama. (Viz. Sanskrit Series.)

V. S.—Vais'eshika Sûtras of Kaṇâda.

Viv.—Vivṛiti, a commentary by Jayanârâyaṇa on the Vais'eshika Sûtras.

---

# NOTES.

1. According to the usual practice of Sanskrit writers, the author begins with a मङ्गल here consisting of a prayer and a salutation to S'iva. The necessity of मङ्गल and its efficiency in enabling the author to complete his work, is generally discussed at the beginning of Nyâya works, *e. g.* Muktāvali, Tarkasangrahadîpikâ; but our author abstains from it here.

हेतवे जगतामेव—एव is taken in several ways:—(1) with जगतां, meaning one who is the cause of all the worlds without exception (एवकारः कात्स्न्यर्थवाची). This seems to be the best way. (2) the cause of the created worlds only, excluding eternal things which cannot be created (एवकारः अकार्यव्यावर्तकः). But this is no praise of S'iva and therefore deserves to be rejected. (3) हेतवे एव—who is always the cause (एवकारः अहेतुत्वव्यावर्तकः). (4) who is only the निमित्तकारण and not the उपादानकारण. (According to the Naiyâyikas, God is only the agent of the world, but not the material cause, as opposed to the Vedântin, to whom God is both.) (3) and (4) are to be rejected, because एव is forced from its actual place. This clause states in brief the प्रमाण or proof for the existence of God—Cf. Mu. p. 2—'संसारमहीरुहस्य बीजाय। संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः। एतेन ईश्वरे प्रमाणमपि दर्शितं भवति। तथाहि यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि। न च तत्कर्तृत्वमस्मदादीनां संभवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः।'.

संसारार्णवसेतवे—This hints at the purpose served by the knowledge of God which is मोक्ष, or freedom from the turmoils of the worldly existence. 'यथा सेतुः पारावारवर्ती पारं प्रापयति तथायमीश्वरोऽपि संसारपारस्य मोक्षस्य प्रापकः' Mita. Cf., however, the explanation of the word सेतु by S'an. on Br. Sû. I. 3. 1.

प्रभवे सर्वविद्यानां—Cf. 'ईशानः सर्वविद्यानाम्', Mahânâ. 17. 5. Cf. S'an. on Br. Sû. I. 1. 3. Pad. takes सर्वविद्यानां with गुरवे and solves सर्वविद्यानां as a genitive Tatpurusha comp. = the knowledge of all (Padârthas). But this is to be rejected; because 1st, the construction is forced and unnatural, and 2ndly, the Karmadhâraya comp. ought to be preferred to the Tatpu., where both are possible, by निपादस्थपतिन्याय or according to the maxim सति सामानाधिकरण्ये न वैयधिकरण्यम्.

शम्भवे—शं भावयति असौ शम्भुः तस्मै.

2. The general method of treatment according to the Naiyâyika consists of three steps:—(1) उद्देश or enumeration of things by their names only (नाममात्रेण वस्तुसंकीर्तनम्),(2) लक्षण or definition (असाधारण: धर्मः) and (3) परीक्षा or examining the propriety of a definition. Some regard विभाग or classification as the fourth step, but it may be as well included in उद्देश. In the present work, the author, first, only enumerates the padârthas, their divisions and sub-divisions; then he proceeds to define them all in the same order, but abstains from परीक्षा, as the book is meant for beginners only. To begin with, however, he first explains what a Padârtha is. A Padârtha is that which is an object of knowledge (प्रमिति). Here प्रमिति ought to be understood to mean बुद्धि in general and not यथार्थानुभव, as opposed to स्मृति and अयथार्थज्ञान. If, however, प्रमिति is understood in its usual sense, then प्रमितिविषयत्व should be taken to mean प्रमितिविषयत्वयोग्यत्व or कदाचित् प्रमितिविषयत्व. Cf. 'नन्वत्रापि भ्रमविषयो व्यावृत्तोऽस्ति इति चेद् न। तस्यापि कदाचित्प्रमेयत्वात्। शुक्तिर्वा रजतं वा तादात्म्यं वा भ्रमविषयो रजतत्वसंसर्गो वा ते सर्वे प्रमेया एव। इदानीं प्रमाविषयो न भवतीति चेत् तर्हि पदार्थानामपि स्मृतिविषयतासमये अपदार्थत्वापत्तिः। कदाचित्ते प्रमेया एवेति यदि भ्रमविषयोऽपि तर्हि तथेति तुल्यम्।' Mita.

Mita. and Pad. hold that प्रमितिविषयत्व is no लक्षण of पदार्थ, because the definition of लक्षण given afterwards (केवलव्यतिरेकी हेतुविशेषो लक्षणम्) does not apply to this. But this goes against the author's statement 'पदार्थसामान्यलक्षणं तु कृतमेव' in the beginning of the लक्षण section. Though प्रमितिविषयत्व may not satisfy all the requisites of लक्षण proper, still there is no objection to regard it as a लक्षण sufficient for the purpose.

T. D. has 'अभिधेयत्वं पदार्थसामान्यलक्षणम्'.—अभिधेयत्व 'namability' and प्रमितिविषयत्व or प्रमेयत्व 'knowability' are really coincident. (पदार्थ lit. means पदस्य अर्थः and अर्थः = ऋच्छन्ति इन्द्रियाणि यं सः).

3. The पदार्थs are seven in number—substance, quality, action, generality, particularity, intimate relation, and non entity. The word पदार्थ is best rendered by the word 'category' in English; and like categories, the पदार्थs of कणाद are nothing but the highest classes to which all the objects of knowledge can be reduced, and in which they can be arranged in subordination and system.

V.S. have only six Padârthas, not mentioning अभाव. As, however, every conception may be either positive or negative, so the objects also corresponding to these conceptions may be positive or negative. So later on Padârthas were first divided into Bhâva and Abhâva, and then the Bhâva Padârthas were further divided into six. This is the case, for instance, in the Lakshanâvali of Udayanâchârya. Later on the Padârthas were themselves divided into seven as here. The sevenfold division can be accounted for thus:—First objects are, broadly speaking, positive (bhâva) or negative (abhâva). Then again positive things may be either properties, or the substratum in which the properties reside. The latter is Dravya. The properties again may be either stationary, or evanescent. The latter are Karma. The stationary properties may be either those that are essential *i. e.* the very life of the thing in which they reside, or may merely serve to distinguish one thing from another. The former is जाति or सामान्य, and the latter is गुण. Cf. 'वस्तुधर्मोऽपि द्विविधः, सिद्धः साध्यश्च । सिद्धोऽपि द्विविधः, पदार्थस्य प्राणप्रदः विशेषाधानहेतुश्च । तत्राद्यो जातिः......द्वितीयो गुणः । साध्यः पूर्वापरीभूतावयवः क्रियारूपः ।' K. P. II. विशेष and समवाय are only accepted to serve some technical purpose and they are peculiar to the Vais'eshikas whose very name is derived from विशेष.

As for the particular order in which they are mentioned, note the following:—'द्रव्यस्य सर्वपदार्थाधारत्वेन समवायिकारणत्वेन च प्राधान्यात् प्रथममुद्देशः । गुणजातीयस्य सर्वद्रव्यवृत्तित्वादुत्पत्त्युत्तरक्षणमेवोत्पन्नत्वेनातिसांनिध्याच्च गुणस्य तदानन्तर्यम् । कर्मजातीयस्य तद्वैपरीत्याद् जात्याधारत्वाच्च तदानन्तर्यम् । सामान्यस्य अनुवृत्तत्वेन त्रितयगतत्वेन च बहुविषयत्वात्तदानन्तर्यम् । विशेषस्य समवेतत्वात्सामान्यप्रतियोगिकत्वाच्च तदानन्तर्यम् । एतेषां पञ्चानां सम्बन्धत्वेन समवायस्य तदानन्तर्यम् । षण्णां निषेधरूपत्वेनाभावस्य तदानन्तर्यम् । इत्युद्देशक्रमः ।' Mita.

एव after सप्त is used to emphasize the number seven as opposed to the sixteen padârthas, for instance, of the followers of Gautama.

4. The substances are nine in number—earth, water, light, air, ether, time, space, soul and mind.

As for the order in which they are mentioned, read 'तत्र सर्वप्रमाणज्येष्ठप्रत्यक्षग्रहणयोग्यानां पूर्वं पृथिव्यप्तेजसामुपन्यासः । तत्राप्येकादशगुणतेजसः पूर्वं चतुर्दशगुणानां पृथिव्यपाम् । तत्रापि सर्वाधारभूतत्वा-

